॥ श्रीः ॥

# पाणिनीयप्रदीपः

## (प्रथमखण्डः)

गोरक्षपुरप्रदेशान्तर्गत ब्रह्मपुरग्रामनिवासि-
रामलग्नत्रिपाठिसम्पादितः ।

[illegible]स्थ-भास्करपुस्तकालयस्वामिना
श्रीगौरीशंकरशर्मणा
निजव्ययतो मुद्रयित्वा प्रकाशितः ।

द्वितीयावृत्तिः ।



श्रीलक्ष्मीनारायण प्रेस में ग. कृ. गुर्जर द्वारा मुद्रित ।

संवत् १९७८ । मूल्यं ॥) अष्टाणकाः ।

॥ श्रीः ॥

# पाणिनीयप्रदीपः

## (प्रथमखण्डः)

गोरक्षपुरप्रदेशान्तर्गत ऋक्षपुरग्रामनिवासि-
रामलग्न त्रिपाठिसम्पादितः।

काशीस्थ-भास्कर पुस्तकालय स्वामिना
श्रीगौरीशंकर शर्मणा
निज व्ययतो मुद्रयित्वा प्रकाशितः।
संशोधितश्च।

द्वितीयावृत्तिः।



श्रीलक्ष्मीनारायण प्रेस में
ग. कृ. गुर्जर द्वारा मुद्रित।

संवत् १९७६। मूल्यं ॥) अष्टाणकाः।

ॐ नमः शिवाय ।

# पाणिनीयप्रदीपः ।

विश्वमूर्त्तिं प्रणम्यादौ सर्वसिद्धिप्रदं शिवम् ।
पाणिनीयप्रदीपोयं क्रियते लोकहेतवे ॥

## तुल्यास्यप्रयत्नं सवर्णम् ।

नन्वत्र सूत्रे आस्यग्रहणं न कार्य्यम् "तुल्यप्रयत्नं सवर्णम्" इत्येव सूत्रमस्तु । आभ्यन्तरप्रयत्नं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादित्यर्थः ।

नचाऽऽस्यग्रहणाभावे तप्तेंत्यादौ पकारतकारयोस्सावर्ण्यात् पकारस्य तकारे परे झरो झरि सवर्णे इति सूत्रेण लोपस्स्यादिति वाच्यम् । झरो झरि सवर्णे इति सूत्रे सवर्णे किं तप्तेंति भाष्यात् पतयोः सवर्णसंज्ञा स्यादिति कल्पनात् । नच भाष्ये सवर्णग्रहणस्य सनूत्लरु रित्यस्यैव प्रत्युदाहरणत्वेन प्रदर्शनात्तप्तेंत्यस्यातत्त्वेनाऽऽस्यग्रहणाभावेऽत्रत्यदोषस्तदवस्थ एवेति वाच्यम् । "ऋलृवर्णयोः" इति वार्त्तिकसामर्थ्येन भिन्नस्थानयोर्न सवर्णसंज्ञा भवतीति ज्ञापनादिति चेन्न । वार्त्तिकप्रामाण्येन सूत्रांशस्य खण्डनमयुक्तमिति नियमात्, अचोश्चेत् ऋलृवर्णयोरेवेति नियमस्यापि सम्भवाच्च ।

नन्वत्र "तुल्यास्यं सवर्णम्" इत्येव सूत्रमस्तु प्रयत्नग्रहणं न कार्य्यम् । ताल्वादि स्थानं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यादित्यर्थः ।

नच प्रयत्नग्रहणाभावे वाक्श्चोततीत्यत्र शकारचकारयोस्सवर्णसंज्ञायां सत्यां "झरो झरि सवर्णे" इति सूत्रेण शकारस्य लोपः स्या-

दिति वाच्यम्। झरो झरि सवर्णे इत्यस्य स्थाने हलः परस्य झयो लोपस्स्यात् सवर्णे झयीत्यर्थकेन "झयो झयि सवर्णे" इतिन्यासेन शकारस्य झय्प्रत्याहारे पाठाभावेनादोषात्। नचैवं न्यासे निस्से निसे निस्स्व निस्वेत्यादौ झयि सकारस्य पाठाभावेन सलोपो न स्यादिति वाच्यम्। वर्णसमाम्नाये "कपय्, शषसर्, हल्" इत्यस्य स्थाने "कपसय्, शषर्, हल्" इति न्यासेन झय्प्रत्याहारे सकारस्य पाठेन तत्र झयो झयि, इति न्यासेनैव सलोपस्य सुलभत्वात्। नच 'कपसय्, शषर्' इति न्यासे शर्प्रत्याहारे सकारस्य पाठाभावेन प्राङ्क्षु गवाङ्क्षु इत्यादौ 'ङ्णोः कुक् टुक् शरि' इत्यनेन कुक् न स्यात्, एवं कः त्सरुः इत्यत्र 'शर्परे विसर्जनीयः' इत्यनेन विसर्जनीयो न स्यात्, रामस्थाता हरिस्फुरतीत्यादौ "खर्परे शरि वा विसर्गलोपः" इति पाक्षिकविसर्गलोपश्च न स्यादिति वाच्यम्। तत्र तत्र सूत्रे "शर्" इत्यस्य स्थाने "सर्" इतिन्यासेन कपसय् सकारमारभ्य शषरो रेफेण सर्प्रत्याहारस्वीकारेणोक्तदोषाणामभावात्। नच "कपसय्, शषर्" इतिन्यासे खय्प्रत्याहारे सकारस्य पाठेन पुंसहनमित्यत्र "पुमः खय्यम्परे" इति सूत्रेण रुत्वापत्त्या पुंस्सहनमित्यनिष्टं स्यादिति वाच्यम्। तत्स्थाने "पुमः खव्यमपरे" इति न्यासेन खव्प्रत्याहारे सकारस्य पाठाभावेनोक्तदोषाऽभावात्। नचोक्तविधन्यासाभ्युपगमे खव्प्रत्याहारे ककारपकारयोः पाठाभावेन पुँस्कोकिलः पुँस्पुत्र इत्यादौ रुत्वं न स्यादिति वाच्यम्। वर्णसमाम्नाये "खफछठथचटतकपव्, सय्, शषर्, हल्" इति न्यासेन खव्प्रत्याहारे ककारपकारयोः पाठसत्त्वेनोक्तदोषाभावात्। नच खफछठथचटतकपव्' इतिन्यासे छव्प्रत्याहारे ककारपकारयोः पाठसत्त्वेन सन्कोकिलः सन्पुत्र इत्यादौ 'नश्छव्यप्रशान्' इति सूत्रेण रुत्वापत्त्या सँस्कोकिलः सँस्पुत्र इत्यनिष्टं स्यादिति वाच्यम्। तत्र खफकपछठथचटतव्' इति न्यासेन छव्प्रत्याहारे ककारपकारयोः पाठाभावेनोक्तदोषाभावात्। नच तत्र खफकपछठथचटतव्, सय्, शषर्, हल्' इतिन्यासे चर् प्रत्याहारे ककारपकारयोः पाठाभावेन पफालेत्यादीनामसिद्धिरिति वाच्यम्। अत्रापि कथंचित् दोषवारणसम्भवादिति सुधियो विचारयन्तु। हलः परस्य सकारस्य झयश्च लोपस्स्यात् सकारे, सवर्णे झयि च परे इत्यर्थकेन "सझयः सझयि सवर्णे" इतिन्यासेन निसे इत्यादौ सलोपस्य सिद्धत्वाच्च॥

यत्तु "प्रयत्नग्रहणाभावे वाक् श्चोततीत्यत्र तु झरो झरि सवर्णे इत्यत्र झयो झयि इतिन्यासं कृत्वा लोपं व्यावर्त्य निंसे इत्यादौ झलो झलीति लोपेन निर्वाहः" इत्युक्तम् तदसंगतम् झलः परस्य सस्य लोपः स्याद् झलीत्यर्थकेन झलो झलीतिसूत्रेण सलोपे निंसे निंस्से इत्यादि वैकल्पिकस्यासिद्धेः झलो झलीतिसूत्रं प्रति 'नश्चापदान्तस्य' इत्यनुस्वारस्य परत्रिपादिकस्यासिद्धत्वेन निन्स्से इत्यवस्थायां नकारस्य झल्प्रत्याहारे पाठाभावेन तेन सलोपस्य कथमप्यप्रवृत्तेः। निंसे इत्यादौ झरो झरीत्यनेनैव वैकल्पिकसलोपो भवतीतिबोध्यम्।

नच प्रयत्नग्रहणाभावे रेफणकारयोर्मूर्धस्थानिकत्वेन सवर्णसंज्ञायां कुण्डं रथेनेत्यत्र रेफसावर्ण्येनानुस्वारस्य णकारः परसवर्णः स्यादिति वाच्यम्। तुल्यास्यसूत्रे 'तुल्यास्यमर्णम् सवर्णम्' इति न्यासेन रेफणकारभिन्नं सवर्णमित्यर्थकेनादोषात्। नच हकारकवर्गयोः शकारचवर्गयोः सवर्णसंज्ञायां उदितः सवर्णग्राहकत्वेन वाक्श्चोततीत्यादौ 'चोः कुः' इतिसूत्रेण शकारस्य स्थाने हकारोपि स्यादिति वाच्यम्। 'कुहोश्चुः' इत्यत्र हकारोपादानेन कवर्गोपादानेन च पञ्चवर्गभिन्नग्रहणेन वर्गस्य ग्रहणं न, वर्गग्रहणेन तद्भिन्नग्रहणं नेतिज्ञापनेनादोषात्। अत एव ज्ञापकात् ककारहकारयोः सवर्णसंज्ञायां तत्करोतीत्यादौ 'झयो होऽन्यतरस्याम्' इत्यस्यापि न प्रवृत्तिः, यकारचवर्गयोः सवर्णसंज्ञायां चकारस्याप्यटत्वेन वाक्श्चोततीत्यादौ शकारस्य 'शश्छोऽटि, इति छत्वापत्तिरपि निरस्तम्। नच प्रयत्नग्रहणाभावे यकारशकारयोः तालव्यत्वात् सवर्णसंज्ञायां यकारस्याण्त्वेन तद्ग्रहणेन शकारग्रहणे अश्वादिशब्दे लोपो व्योर्वलीति सूत्रेण वलपरतः शकारस्यापि लोपः स्यात्, किञ्च हरिं शंकर इत्यादौ शकारे परेऽनुस्वारस्य परसवर्णानुनासिको यकारः स्यात् रेफोष्मणां सवर्णाञ्च गृह्णन्तीति भाष्यन्तु प्रयत्नग्रहणसत्त्वे एवेति वाच्यम्। यकाररेफलकारैः शषसानां ग्रहणे सिद्धे सषशर् इति सूत्रारम्भसामर्थ्येन यकाररेफलकारग्रहणेन शषसानां नेतिज्ञापनात्। नच शरोचि, वा शरि, शर्परे विसर्जनीयः इत्याद्यर्थं शर्प्रत्याहारस्यावश्यकत्वेन शषसर् इति सूत्रस्य चारितार्थ्यसम्भवेनोक्तदोषस्य तादवस्थ्यमेवेति वाच्यम्। रषाभ्यामित्यत्र षग्रहणेनोक्तार्थज्ञापनात्। एतेन प्रयत्नग्रहणाभावे दर्शनमित्यत्र णत्वं स्यादिति निरस्तम्। अत एव तुत्सीदती-

त्यादौ लत्वमपि न। तस्मात् प्रयत्नग्रहणं व्यर्थमेवेति चेन्न। मात्रालाघवसत्त्वेपि बहूनामर्थानां कल्पनेन ज्ञानगौरवात् ॥

## अचोञ्णिति।

नन्विदं सूत्रं मास्तु 'अत उपधायाः' इत्यत्रैव ञ्णितीति पाठ्यम्। नच सूत्राभावे सखायावित्यादौ वृद्धिर्न स्यादिति वाच्यम्। 'सख्युरसम्बुद्धौ' इत्यस्य स्थाने सख्युरङ्गस्य पे आदेशस्स्यादसम्बुद्धौ सर्वनामस्थाने परे इत्यर्थकेन 'पे सख्युरसम्बुद्धौ' इतिन्यासेनोक्तदोषाभावात्। नच सूत्राभावे गौः गावावित्यादौ वृद्धिर्न स्यादिति वाच्यम्। गोतो ञ्णितीति सूत्रस्थाने 'गोत औद्' इतिन्यासेन सर्वनामस्थाने परे गोः औः स्यादित्यर्थकेन निर्वाहात्। न च गोत औदितिन्यासे 'शसुसमोवा' इत्यत्र का गतिरिति वाच्यम्। गौरित्यादौ वृद्ध्यर्थं गोतो ञ्णितीत्यस्य स्थाने 'गोतो वृद्धिः' इतिन्यासः सर्वनामस्थाने परे गोः वृद्धिरिति तदर्थः तस्य शसुसमो वेत्यत्र सम्बन्धेनादोषइति। एवञ्च सख्युरसम्बुद्धौ, इत्यत्रापि वृद्धेरेवानुवृत्त्या सख्युरङ्गस्य वृद्धिरसम्बुद्धौ सर्वनामस्थाने इत्यर्थकेन अलोन्त्यपरिभाषयेष्टसिद्धिः पूर्वोक्त पे सख्युरसम्बुद्धावितिन्यासो न कार्य्यः ॥

नच सूत्राभावे कुम्भकार इत्यादौ वृद्धि र्न स्यादिति वाच्यम्। कृ अ इत्यवस्थायां सार्वधातुकार्धधातुकयोः, इति गुणोत्तरम् 'अत उपधायाः' इति वृद्धौ तत्सिद्धेः।

नच गुणोत्तरा वृद्धिर्नेति परिभाषया वृद्धिर्न स्यादिति वाच्यम्। गमकत्वाभावेन फलाभावेन चैतस्याः परिभाषाया उपेक्षणात्। अत एव हृस्यन्तेति सूत्रे जागृग्रहणं चरितार्थम्, एवं भावयतीत्यादीनामपि सिद्धिः। नच सूत्राभावे शिङ्धातोः 'शिङो धुक्लक्वलञ्वलञि' त्युणादिसूत्रेण वलञ्कृते शैवल इत्यत्र वृद्धिर्न स्यादिति वाच्यम्। तत्र वलञित्यस्य स्थाने डैवलिति न्यासेन शैवल इत्यस्यसिद्धेः। नच डैवल् इति न्यासे ञित्वाभावेन नामधातो स्वरितञित इति सूत्राप्रवृत्त्योभयपदं न स्यादिति वाच्यम्। डैवलञितिन्यासात्, शैवल इत्यस्यौणादिकत्वेनाव्युत्पन्नत्वाच्च। नच सूत्राभावे जजागेत्यत्र जाग्रो विचिण्णल्ङित्स्विति सूत्रेण णलि गुणनिषेधेन अत उपधायाः, इतिसूत्रस्याप्रवृत्त्या यणि जजाग्रेत्यनिष्टं स्यादिति वाच्य

तस्मिन् सूत्रे णल्ग्रहणम्, अचोञ्णितीति सूत्रञ्च न कार्य्यमिति प्रश्नात्। नच जाग्रेति सूत्रे णल्ग्रहणाभावे उत्तमे णलि गुणे, णलुत्तमो वेति सूत्रेण विकल्पणित्त्वे वृद्धौ च, जजागार जजागरेत्यनिष्टं स्यात् इष्यते तु जजागार जजाग्रेति वाच्यम्। णलुत्तमो वेति सूत्रस्थाने 'णलुत्तमोऽपिद्वा' इतिन्यासे जागृ धातोः उत्तमे णलि पित्पक्षे गुणे कृते उपधावृद्धिः अपित्पक्षे असंयोगाल्लिटीतिसूत्रेण किंत्वे जजागार जजाग्रेति रूपद्वयमिष्टमतो णल्ग्रहणम्, अचोञ्णितीति सूत्रञ्च न कार्य्यमिति प्रश्नात्। नच णलुत्तमोऽपिद्वेतिन्यासे तॄधातो रुत्तमे णलि ततार तत्रेति स्यात् इष्यते तु ततार ततरेति वाच्यम्। नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति भाष्यात् जजागारेत्येतदर्थम् अचोञ्णितीति सूत्रस्याकर्तव्यत्वात्।

नच सति सूत्रे चकावित्यादौ क इव चचारेति विग्रहे क्विपि धातुत्वाल्लिटि द्वित्वे चक अ इत्यवस्थायां वृद्धौ आत औ णलित्यनेनौ कृते तस्य सिद्धिः सूत्राभावे आत औणलित्यस्याप्रवृत्त्या पररूपेण चक इत्यनिष्टं स्यादिति वाच्यम्। आत औणलिति सूत्रे अशब्दस्य षष्ठ्येकवचने आदिति तस्यायमर्थः अवर्णात् परस्य णल औ स्यादित्यदोषात्। नचेत्यर्थे उत्तमे णलि चकौ इत्येकमेवरूपं स्यात् इष्यते तु णलुत्तमोवेति विकल्पणित्वात् चकौ चक इति वाच्यम्। 'आत औ णिण्णलः' इतिन्यासेनावर्णात् परस्य णिण्णल औकारस्स्यादित्यर्थेनोक्तदोषाभावात्। नच 'आत औणिण्णलः' इति न्यासे पाधातोः उत्तमे णलि णलुत्तमोवेति णित्पक्षे पपौ इति रूपं णिदभावपक्षे पपेति रूपद्वयमनिष्टं स्यात् इष्यते तु पपौ इत्येकमेवेति वाच्यम्। एकाज्भ्यः क्विपोऽनभिधानमितिभाष्येण चकौ इतिरूपं भवत्येव नेतिस्वीकारात्। तद्वा सूत्रस्य जागृधातोः णलि जजागारेत्येकमेवोदाहरणम् तत् सूत्राभावे नह्येकमुदाहरणमितिभाष्येण वारणीयम्। उत्तरार्थमपि न तत् तत् सूत्रे एव वक्तव्यत्वादिति चेन्न स्पष्टप्रतिपत्त्यर्थमिति समाधानादिति दिक्॥

## जसि च।

ननु जसि च, ऋुसि चेति सूत्रद्वयं न कार्य्यम्। तत्स्थाने लाघवात् 'ञिति च' इत्येव सूत्रमस्तु। ह्रस्वान्तस्याङ्गस्य गुणस्स्याद्ञिति परे इत्यर्थः। हरयः, अजागरुः, अजुहवुरित्यादीनामनेनैव सिद्धिरिति-

प्रश्नः। नच जिति चेतिन्यासे उकार्थे अविभयुरित्यादौ ह्रस्वान्तत्वाभावेन गुणो न स्यादिति वाच्यम्। जुसि च, इतिसूत्रस्थाने जिति च, इतिन्यासेन तत्र ह्रस्वस्य गुण इति सूत्रस्यासम्बन्धेन इक्परिभाषोपस्थित्या इगन्ताङ्गस्य गुणस्स्याद् जिति परे इत्यर्थेन सूत्रद्वयं न कार्य्यमिति प्रश्नात्। नच जिति चेति न्यासे ऊर्णुयुः जागृयुरित्यादौ यदागमन्यायेन विशिष्ट जित्वात् गुणस्स्यादिति वाच्यम्। यदागमपरिभाषायाः अनित्यत्वात्, अचीत्यनुवर्त्य इगन्ताङ्गस्य गुणस्स्यात् अजादौ जिति परे इत्यर्थाच्च। नच जिति चेतिन्यासे उकार्थे वातप्रस्यः, गौर्य्ये इत्यादावपि गुणस्स्यादिति वाच्यम्। दीर्घाज्जसि च, इत्यत्र जसिग्रहणसामर्थ्याज्जसि दीर्घस्य गुणो नेति ज्ञापनेनादोषात्। नच जिति चेतिन्यासे वञ्चुप्प्रत्यये जकारस्य प्रश्लेषः तस्य चुटू इत्यनेन इत्संज्ञालोपे सति मुनि वञ्चुरित्यत्र गुणस्स्यादिति वाच्यम्। तत्र तालव्ययकारस्य प्रश्लेषेण तस्य लोपो व्योर्वलीत्यनेन लोपात्। नचैवं पटुजातीय इत्यत्र जकारस्येदानीमित्संज्ञायां जित्परत्वात् गुण इति वाच्यम्। तत्रापि लोपो व्योर्वलीतिलोपेन जकारप्रश्लेषात्। नच जिति चेति न्यासे शब्दस्वरूपस्य ग्रहणे हरि जितीत्यत्र गुणस्स्यात् हरय इत्यादौ च न स्यादिति वाच्यम्। वाद य इत्यादिनिर्देशात्। नच अजुहवुरित्यादौ ङित्वेन क्ङिति चेति निषेधात् गुणो न स्यादिति वाच्यम्। इदानीमपि जिति चेति सूत्रारम्भसामर्थ्यात्। नच हरय इत्यादौ जसि जिति चेति सूत्रं चरितार्थम् सामर्थ्यकल्पनमयुक्तमिति वाच्यम्। भ्रेजुंसीत्यत्र जकारग्रहणसामर्थ्यादिति चेन्न। अनेकक्लिष्टकल्पनापेक्षया यथोक्तमेव वरमिति स्वीकारात्॥

## सुडनपुंसकस्य।

नन्वत्र लाघवात् 'सुट' इत्येव सूत्रमस्तु अनपुंसकग्रहणं न कार्य्यम्। सुट्प्रत्याहारः स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरिति तदर्थः। अनपुंसकग्रहणाभावे ज्ञाने इत्यादौ सर्वनामस्थानपर्य्युदासात् भसंज्ञायामेवैव यस्येति लोपाभावे सिद्धे औङः श्यामिति वार्त्तिकमपि कार्य्यमिति महल्लाघवम्। नचानपुंसकग्रहणाभावे अहनी अह्नी इत्यादौ भत्वाभावात् विभाषा ङिश्योरिति सूत्रेणानोऽकारस्य लोपाभावे दीर्घापत्तिरिति वाच्यम् औङस्थानिकश्यादेशे साम्प्रतं यस्येतिलोपाप्राप्त्या औङःश्यामिति तन्निषेधकस्य वचनस्य वैयर्थ्येन शीपरे

भत्वप्रयुक्तकार्य्याणि भवन्तीति ज्ञापनात्। किञ्च विभाषा ङिश्योरित्यत्र 'शीग्रहणसामर्थ्येन शीपरे अभस्याप्यनोऽकारस्य लोप इति ज्ञापनात्। नचैवं सुपथी इत्यादौ अनपुंसकग्रहणाभावे अन्यानि भत्वप्रयुक्तकार्य्याणि न भवन्तीति वाच्यम्। भत्वावच्छिन्नोद्देश्यककार्य्यमात्रस्य शीपरे विधानमिति ज्ञापनात् असति बाधक इति न्यायात्।' नचैवमपि अनपुंसकग्रहणाभावे ज्ञाने इत्यादौ सर्वनामस्थानसंज्ञापरया 'नपुंसकस्य झलचः' इति नुमापत्तिः, 'शिसर्वनामस्थानम्' इतिसूत्रस्य नपुंसके चेत् शावेवेति नियमार्थत्वं तु वक्तुमशक्यम्; शसः शिप्रत्ययस्याप्राप्ततत्संज्ञाविधानार्थं तस्य चरितार्थत्वेन नियमार्थत्वापायात्। नच टाटकारेण सुट्प्रत्याहारे शसोप्यन्तर्भावात् शिसर्वनामस्थानमित्यस्य नियमार्थत्वेनेतरेषां नपुंसके संज्ञाविरहे सिद्धे अनपुंसकग्रहणाभावेनोक्तदोष इति वाच्यम्। औटि टकारोच्चारणसामर्थ्येन तेनैव सुट्प्रत्याहारस्य स्वीकारात्। एवञ्च तदभावे पूर्वोक्तदूषणं तदवस्थमेवेति वाच्यम्। शीभिन्नस्य सुटः सर्वनामस्थानसंज्ञेत्यर्थकेन "सुडशी" इतिन्यासेनोक्तदोषस्य वारणात्। सुडशीति न्यासेन ज्ञाने इत्यादौ सर्वनामस्थाननिमित्तकनुमः, अहनी ...नी इत्यादौ दीर्घापत्तेश्च वारणात्। एतेनात्रदीर्घवारणं शीसर्वनामस्थानमितिनियमेन न कार्य्यमितिबोध्यम्।

नच सुडशीतिन्यासे स्त्रियां सर्वे इत्यादौ सर्वाशब्दात् औङौटोः श्यादेशे सर्वशब्दात् जसः श्यादेशे सर्वे इत्यादौ च सर्वनामस्थानत्वाभावात् भसंज्ञापरया यस्येति चेत्यल्लोपापत्तिरिति वाच्यम्। औङः श्यामिति वार्त्तिके औङ्ग्रहणं परित्यज्य श्यां प्रतिषेध इत्यनेन लोपाभावस्य सुलभत्वात्। यस्येति सूत्रे नदीसंज्ञकेकार इत्यर्थं स्वीकृत्य तत्प्रत्याख्याने तदलाभाच्च। नचानपुंसकग्रहणाभावे अतिजरसं कुलं पश्येत्यत्र नुमापत्तिरिति वाच्यम्। सन्निपातपरिभाषया नुम्वारणसम्भवात्। नचातिजरसं कुलं पश्येत्यादौ झलन्तलक्षणनुमापत्तिः, 'शेखरकारमते अतिजरसं कुलं न भवति तदा न दूषणम्' किन्तु दीक्षितमते एव दूषणमिति तु न भ्रमितव्यम्, सिद्धान्ते अतिजरसं ...इत्येव भवतीति भाष्यादिति वाच्यम्। 'नपुंसकस्य झलचःशौ' इति न्यासेन वारणात्। नचैवं न्यासे गौरवापत्तिरिति वाच्यम्। शिसर्वनामस्थानम्, इति सूत्रस्याकर्त्तव्यत्वेन लाघवात्। नचैवं सूत्राभावे ज्ञानानीत्यादौ दीर्घो न स्यादिति वाच्यम्।'सर्वनामस्थाने चासम्बुद्धौ

शौ' इति न्यासेन दीर्घस्यैसुलभत्वात् । प्रत्यञ्चीत्यादौ नुम् तु 'उगिदचां सर्वनामस्थानेऽधातोः शौ' इतिन्यासेन सुलभः गौरवमपि न अस्मादेव शावित्यस्यानुवृत्त्या सिद्धौ नपुंसकस्य झलचः इति सूत्रे शावित्यस्याकर्त्तव्यत्वेन लाघवात् । नच सुपन्थानीत्यत्र भसंज्ञया टेर्लोपापत्तिरिति वाच्यम् । टेर्लोपे कृते थोन्थः, इत्यत्र 'थोन्थाः' इतिन्यासेनापत्तिविरहात् । सर्वनामस्थानपरत्वाभावेन सूत्रस्यैवाप्रवृत्तिरित्यपि न वाच्यम् । सूत्रे शाविति पाठेन निर्वाहादिति चेन्न । अनेकक्लिष्टकल्पनापेक्षया सूत्रकरण एव लाघवात् ॥

## स्वादिष्वसर्वनामस्थाने ।

नन्विदं सूत्रं माऽस्तु तत्स्थाने लाघवात् "शसादिषु" इत्येव सूत्रमस्तु कप्प्रत्ययावधिषु शसादिषु परतः पूर्वं पदसंज्ञं स्यादिति तदर्थः ।

यचि भमित्यस्यापि यकारादिष्वजादिषु च कप्प्रत्ययावधिषु शसादिषु परतः पूर्वं भसंज्ञं स्यादित्यर्थः । शसादिष्विति न्यासे ... इत्यादौ शीपरे शसादिपरत्वाभावेन भसंज्ञाभावेनैव भस्येति चेत् लोपाभावः सिद्धः औङः श्यामिति वार्तिकमपि न कार्य्यमिति महल्लाघवम् ॥ न च शसादिष्विति न्यासे कतरदित्यादौ भसंज्ञाभावात् टेरित्यनेन लोपो न स्यादिति वाच्यम् । डित्वसामर्थ्यादभस्यापि टेर्लोप इति ज्ञापनात् । न च शसादिष्विति न्यासे अह्नी इत्यादौ शीपरे भसंज्ञाभावेन विभाषा ङिश्योरित्यनेनाल्लोपो न स्यादिति वाच्यम् । शीपरे अभस्याप्यनोऽकारस्य लोप इति ज्ञापनात्, विभाषा ङिश्योरित्यत्र शीग्रहणसामर्थ्यात् ॥ न चैवं ज्ञापनेपि सुपथी, सुपदी, सुधूनी इत्यादौ शसादिष्विति न्यासे तत्तद्भत्वप्रयुक्तकार्य्याणि न भवन्तीति वाच्यम् । विभाषा ङिश्योरित्यत्र शीग्रहणसामर्थ्येन सामान्यतः ...वच्छिन्नोद्देश्यककार्य्यमात्रस्य शीपरे विधानमिति ज्ञापनात् असति बाधके प्रमाणानां सामान्ये पक्षपात इतिन्यायादिति चेन्न । अह्नानीत्यादौ शसः शिकृते शसादिष्वितिन्यासे शिपरे भत्वात् नान्तलक्षणदीर्घस्बाधित्वा परत्वादल्लोपोन इत्यनेनाल्लोपापत्तेः, नेर्भताङ्गस्येति सूत्रस्थस्वादिष्विति योगविभागपरकभाष्यग्रेण सह विरोधश्च ॥

# एत्येधत्यूठ्सु ।

नन्विदं सूत्रं न कार्य्यम् तत्स्थाने लाघवात् " ठितिच " इत्येव सूत्रमस्तु अवर्णात् ठिति परे वृद्धिरेकादेशस्स्यादिति तदर्थः । X

न च ठिति चेति न्यासे विश्वौह,: प्रष्ठौहः इत्यादीनां सिद्धावपि प्रैधते, उपैतीत्यादौ ठित्वाभावात् वृद्धि र्न स्यादिति वाच्यम् । तत्र तत्रैधठ् वृद्धौ इठ् गताविति पाठेन निर्वाहात् । नच यथोक्तसूत्रे प्रेत इत्यादौ वृद्धिर्न भवति भवन्न्यासे वृद्धिः स्यादिति वाच्यम् । तत्र वृद्धिरेचीत्यतः एचिपदसम्बन्धेन, एजादिठिति परे वृद्धिः स्यादित्यर्थकरणेनादोषात् । नचैचीति संबन्धे विश्वौहः प्रष्ठौहः इत्यादावेव एजादिठित्वाभावात् वृद्धिर्न स्यादिति वाच्यम् । यत्र वाह ऊठिति सूत्रं तत्र " वाह ओठ् " इति न्यासेनादोषात् नच वाह ओठिति न्यासे इक्प्रत्याहारे ओकारस्य पाठाभावेन सम्प्रसारणसंज्ञाभावेन सम्प्रसारणाच्चेत्यनेन पूर्वरूपाभावेन वृद्धौ सत्यां पश्चादेचोऽवादेशेन प्रष्ठौह इत्यस्य सिद्धिर्न स्यादिति वाच्यम् । 'इच् यणः सम्प्रसारणम् ' इति न्यासेन तत्यभावात् । नन्न वाह ओठ् , इति न्यासे वार्य्यूह इत्यादीनां सिद्धिर्न स्यादिति वाच्यम् । (असिद्धं वहिरङ्गमन्तरङ्गे) इति परिभाषाज्ञापनपरभाष्यप्रामाण्येन वार्य्यूह इत्यादीनामनभिधानात् । न च वाह ओठ् इति न्यासे प्रष्ठौह इत्यादौ ऊठिदमित्यनेन शसादिविभक्ति रुदात्ता न स्यादिति वाच्यम् । ओठिदमिति न्यासेनादोषात् । न चैचीति सम्बन्धे एजादिठिति परे वृद्धिः स्यादित्यर्थे च्छ्वोः शूठिति सूत्रात् ऊठित्यनुवर्त्य ज्वरत्वरेति सूत्रेणोठि जनावित्यादौ एजादिठित्वाभावेन वृद्धि र्न स्यादिति वाच्यम् । च्छ्वोःशूठिति सूत्रेपि ओठिति पाठेनादोषात् । न च तत्र ओठिति पाठे अक्षद्यूरित्यस्यासिद्धिरिति वाच्यम । ज्वरत्वरेति सूत्रे ओठिति न्यासेनादोषात् । न च ठिति चेति न्यासे एचितिसंबन्धे सन्धानोः च्छ्वोः शूठिति ऊठि स्यौनातीत्यादौ एजादित्वाभावात् वृद्धि र्न स्यात् तत्रोठिति पाठे तु अक्षद्यूरित्यस्यासिद्धिरिति वाच्यम् । ऊठः ठित्वसामर्थ्यात् एजादित्वाभावेपि तत्र वृद्धिसिद्धेः । X

ठिति चेति न्यासे एचीतिसम्बन्धे विश्वौहः प्रष्ठौह इत्यादावपि ऊठः ठित्वसामर्थ्येनैजादित्वाभावेपि वृद्धिसिद्धिः । नचोठिदमित्यत्र विशेषणार्थत्वेन विश्वौह इत्यादौ स्वरार्थमूठः ठित्वमिति वाच्यम् ।

वाह ऊठितिसूत्रस्थभाष्यपर्य्यालोचनया, अन्तरङ्गपरिभाषाज्ञापकपरभाष्यस्वारस्येन च विश्वौह इत्यादौ ऊठिदमिति स्वराप्रवृत्तेः। अत एव भाष्यकृतोठ्ग्रहणाभावे स्वरांशे दोषो नोद्भावित इति चेन्न। ठितिचेति न्यासे मात्रालाघवसत्त्वेपि अनेकक्लिष्टकल्पनापेक्षया यथोक्तसूत्रमेव रमणीयमिति स्वीकारात्।

## वोतो गुणवचनात् !

नन्वत्र उत् ग्रहणं न कार्य्यम्।

वा गुणवचनादित्येव सूत्रमस्तु। गुणवाचिनः प्रातिपदिकाद्वा ङीष् स्यादित्यर्थः। नचोत्ग्रहणाभावे अजाद्यतष्टाबिति सूत्रादत् इत्यस्य सम्बन्धेन अदन्तात् गुणवाचिनः प्रातिपदिकात् वा ङीष् स्यादित्यर्थेन गृहीत्यादौ ङीष् न स्यादिति वाच्यम्। उदित्यस्याभावेपि खरुसंयोगोपधान्नेत्येतत् सामर्थ्येनात् इत्यस्यात्रासम्बन्धात्। नचोत्ग्रहणाभावे गुणवाचिनः प्रातिपदिकात् ङीषित्यर्थे शुचेरौणादिकः किदिनिति इनि शुचिरित्यादौ गुणवाचकत्वात् ङीष् स्यादिति वाच्यम्। तस्य कृदन्तत्वात् कृत इकारादित्यनेनोत्ग्रहणे सति असति वा तत्र वैकल्पिकेष्टापत्तेः। न च उणादीनामव्युत्पन्नत्वस्यैवसिद्धान्तितत्वेन कृदिकारादित्यस्यात्राप्रवृत्त्या ङीष्नेष्टः, उत् ग्रहणेऽसति तु ङीष् स्यादिति वाच्यम्। उणाद्यन्तानां व्युत्पन्नत्वस्यापि तत्र तत्र सिद्धान्तितत्वेन, वक्ष्यमाणस्य वृत्तिकारसम्मतस्य व्यवस्थितविभाषात्वस्य सर्वतोऽक्तिन्नर्थादित्यस्यच सत्त्वेन तत्र वैकल्पिकङीष् इष्टो नोत् ग्रहणाभावे दोष इतिस्वीकारात्। नचोत् ग्रहणाभावे उक्तार्थे शुक्लेत्यादौ गुण वाचकत्वात् ङीष् स्यादिति वाच्यम्। तत्रापि संयोगोपधत्वेन खरुसंयोगोपधान्नेति निषेधात्। न च खरु शब्दसाहचर्य्येण संयोगोपधस्याप्युकारान्तस्यैवेत्याशयेन शुक्लेति प्रत्युदाहरणमिति वाच्यम्। साहचर्य्यपरिभाषायाः तत्तत् प्रामाण्येनानित्यत्वकल्पनेनादोषात्। नचोत् ग्रहणाभावे श्यामेत्यादौ गुणवाचकत्वात् ङीष् स्यादिति वाच्यम्। कल्याणशब्दो बह्वादिगणे पठ्यते उत् ग्रहणाभावे श्यामेत्यादौ यथा ङीष् क्रियते तथा कल्याणशब्दादपि ङीष् सुलभः तदर्थं बह्वादिगणे पाठो व्यर्थः तत् सामर्थ्याद् अदन्तात् गुणवाचिनः प्रातिपदिकात् ङीष् चेत्तर्हि कल्याणशब्दादेवेतिनियमात्। खरुग्रहणसा-

अर्थ्येन विपरीतनियमस्तु नेति चेन्न तान्तद्दरित् शब्दे ङीष् वारणायोत् ग्रहणं कर्त्तव्यमेवेत्याशयात्।

## टाबृचि।

### पूर्वसूत्रप्राप्तङीपोपवादः।

ऋचि वाच्यायां पादन्ताट्टाप् भवतीति सूत्रार्थः। एकपदा। पादशब्दसमानार्थकमकारान्तरूपदशब्दमङ्गीकृत्य एकपदेत्यस्य सिद्धिं कृत्वा टाबृचिति सूत्रं ङ्याप्प्रातिपदिकादितिसूत्रे भाष्ये प्रत्याख्यातम्, प्रत्याख्यानपक्षे पादोऽन्यतरस्यामित्यनेन ऋचि एकपदी, एकपादित्यपि भवतीति न भ्रमितव्यम् तदेकवाक्यतया प्रत्याख्यानपक्षेपि एकपदेत्येव भवतीति स्वीकारात्। पादन्तस्य ऋच्यनभिधान मितिभाष्याशयात् अन्यथा आरम्भप्रत्याख्यानपक्षयोः फलभेदः स्यात् फलैक्ये प्रत्याख्यानं सम्भवति न तु फलभेदे तस्मात् आरम्भप्रत्याख्यानयोः एकपदेत्येव भवति। एतेन यत्तु यद्यपि पादशब्दसमानार्थकः पदशब्दोस्तीति तेनैव एकपदा, द्विपदेतिरूपं सिध्यति टाबृचीति सूत्रं प्रत्याख्यातं तथापि ऋचि वाच्यायां एकपदी एकपादितिप्रयोगवारणाय सूत्रं कार्य्यम् प्रत्याख्यानमयुक्तम् अन्यथा प्रत्याख्याने पादोन्यतरस्यामित्यनेनोक्तौ प्रयोगौ ऋचि स्याता मित्याहुस्तदपास्तमिति प्राञ्चः।

नव्यास्तु शेषाद्विभाषेति सूत्रस्थभाष्यविरोधात् अस्यापवादत्वस्यानुक्तिरसङ्गतम् तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे लावकाशत्वात् अत एव प्रकृतसूत्रप्रत्याख्यानपरं भाष्यं सङ्गच्छते तथाहि प्रत्याख्यानपक्षे पादोन्यतरस्यामित्यनेन एकपदी, एकपादित्यपि ऋचि इष्यत एव, तथा च प्रत्याख्यानपक्षे एकपदी, एकपाद्, एकपदेतिरूपत्रयं भवति तदेकवाक्यतया सूत्रकारमतेपि रुपत्रयसिद्धये पादोन्यतरस्यामित्यतः टाबृचीत्यत्रान्यतरस्यामित्यनुवर्त्तते अन्यथा फलभेदः स्यात् सूत्रस्यापवादत्वे सूत्रमते एकपदेत्येव प्रत्यख्यानपक्षे एकपदीत्यादि रूपत्रयमिति फलभेदस्स्पष्ट एव पादन्तस्य ऋच्यन मिधानमिति तु न भाष्याशयो वर्णनीयः सूत्रकारमते इष्टस्य ङीबन्त प्रयोगस्या सिध्यापत्तेः पञ्चेत्यादौ टाप्ङीपोरुभयोर्निषेधाय न षडिति सूत्रे ङीपोरनुवृत्तेरावश्यकता तच्च टाबृचीत्यत्र ङीबनुवृत्तिं विना न सम्भवति भाष्ये न षट्स्वेत्यस्य स्त्रियां यत्प्राप्नोति तन्नेत्यर्थसिद्धये ऋक्षे

भ्य इत्यतो ङीब्ग्रहणस्य टाबृचीत्यतष्टाप्ग्रहणस्य चानुवृत्तिः कृता डाबुभाभ्यामित्यत्र न षडित्यस्य चानुवृत्तिः कृता तत्र च टाबृचीत्यत्र ङीब्ग्रहणस्यानुवृत्तिं विनोत्तरत्र ङीब्ग्रहणानुवृत्तिर्न सम्भवति मण्डूकप्लुति स्वीकारे तु गौरवम् यदि च ङीपोनुवृत्तिस्तर्हि ऋचि-ऋिपदी तीष्टमेवेति दिक् ।

## बहुवचने झल्येत् ।

नन्वत्रसूत्रे झल्ग्रहणं न कार्य्यम्, "बहुवचने एत्" इत्येव सूत्रमस्तु बहुवचने सुपि परे एत्वं स्यादिति तदर्थः ।

न च झल्ग्रहणाभावे अतो दीर्घो यञीतिसूत्रात् यञीत्यस्य सम्बन्धेन यञादौ बहुवचने सुपि परे अतोङ्गस्यैत्वं स्यादित्यर्थे रामेष्वित्यादावेत्वं न स्यादित्यव्याप्तिदोषवारणाय झल्ग्रहणमिति वाच्यम् । प्रयोजनमन्तरा कचित्कस्यचित्पदस्याऽनुवृत्त्यदर्शनादिह यञनुवृत्ति प्रयोजनस्यादृष्टत्वेन झल्ग्रहणाऽभावे तत्र यञपदस्याप्यननुवृत्तेरुक्त स्थलीयाव्याप्तिवारणस्य सुलभत्वेन झल्ग्रहणवैयर्थ्यस्य स्पष्टत्वात् । न च झल्ग्रहणाभावे बहुवचने सुपि परे अतोङ्गस्यैत्वं स्यादित्यर्थे रामाः रामानित्यादौ परत्वात् प्रथमयोः पूर्वसवर्णदीर्घं बाधित्वा एत्वं स्यादिति वाच्यम् । नादिचीत्यत्राचिग्रहणानुवृत्त्यैवेष्टसिद्धाविचिग्रहण सामर्थ्यादेत्वस्य बाधात् । नच रामा रामानित्यादौ दीर्घनिषेधार्थमिचिग्रहणमिति वाच्यम् । एत्वेन पूर्वसवर्णदीर्घबाधे तद्वैयर्थ्यस्य स्पष्टत्वात् । न च इचिग्रहणाभावे दीर्घाज्जसि चेत्यत्राप्यचिग्रहणानुवृत्त्या शसि गौरीरित्यादौ दीर्घनिषेधापत्तिरितिवाच्यम् । जसिग्रहणसामर्थ्येन अकारादिसुपिपरे दीर्घनिषेधश्चेत्तर्हि जस्येवेति ज्ञापनेनादोषात् । किञ्च तस्माच्छस इत्यतःप्राक् दीर्घाच्छसीतिन्यासेन दीर्घाच्छस्येव दीर्घ इति नियमेनोक्तदोषाभाव इति स्वीकारात् दीर्घादेव शसीति विपरीतनियमस्तु न नृनपे, कानाम्रेडित इति निर्देशात्, दीर्घात् सुटीतिन्यासाच्च नोक्तशेषः । न च झल्ग्रहणाभावे हरीणामित्यादौ सावकाशं नुटं बाधित्वा रामाणामित्यादौ परत्वान्नुटः प्राक् राम आमित्यवस्थायामेत्वं स्यात् तद्वारणार्थं झल्ग्रहणमिति वाच्यम् । झल्ग्रहणाभावे उतोवृद्धि र्लुकि हलीति सूत्रात् हलीत्यनुवर्त्य हलादौ बहुवचने सुपि परे अतोङ्गस्यैत्वं स्यादित्यर्थेन तत्रैत्ववारणात् । न च झल्ग्रहणाभावे हल्पदस्यानुवृत्तौ अग्नीनामित्यादौ सावकाशं

नामीति दीर्घं बाधित्वा रामाणामित्यादौ परत्वादनेनेत्वं स्यादतो झल्ग्रहणं कर्त्तव्यमिति वाच्यम् । सन्निपातपरिभाषया रामाणामित्यादौ दोषवारणादतो झल्ग्रहणं न कार्य्यमिति झलि किमिति प्रश्नकर्तुराशय इति चेन्न । सर्वेषामित्यादि निर्देशेन, झल्ग्रहणमेत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञपनार्थमिति स्वीकारेण च झल्ग्रहणाभावे रामाणामित्यादावेत्वं स्यादिति समाधानात् । न च पर्जन्यवल्लक्षणप्रवृत्त्या कृताकृतप्रसङ्गित्वान्नामीत्यस्य नित्यत्वात् रामाणामित्यादौ तदभावे परत्वात् प्राप्तमेत्वं बाधित्वा दीर्घादेशे झल्ग्रहणस्य स्वांशे चारितार्थ्यं नायातीति झल्ग्रहणं व्यर्थमिति वाच्यम् । शब्दान्तरस्येति न्यायेन नामीत्यस्यानित्यत्वात् ।

न च उतोवृद्धि रिति सूत्रे हलीत्यस्य स्थाने झलीति न्यस्य बहुवचन इति सूत्रे तदेवानुवर्त्त्यं यथाश्रुतार्थसत्त्वाद्रामाणामित्यादौ न दोष इति वाच्यम् । उत इत्यत्र झलीतिपाठे यौमीत्यत्र वृद्ध्यनापत्तेः । नच मृझलीति करणे नोकस्थलीयोकापत्तिरिति वाच्यम् । तुरुस्तु शम्यम इति सूत्रे तस्यैवानुवृत्तौ स्तुवीवः, स्तुव इति लक्ष्यस्य साधुत्वेन तत्र दोषात्, अतः उत इति सूत्रे हलीतिन्यास एव युक्तः, बहुवचन इति सूत्रे च झलीति कार्य्यमेवेत्युत्तरम् ।

न च ह्रस्वनद्यापो नुडित्यस्य स्थाने ह्रस्वनद्यापो नुगिति न्यासे आमि परे प्रकृतेरेव नुगागमे हलादिपरत्वाभावात् रामाणामित्यादौ न दोष इति वाच्यम् । नामव्यवहितपूर्वत्वविशिष्टस्याजन्तस्याङ्गस्यासत्त्वात् नामीत्यस्याप्रवृत्तौ तत्र दोषात् । न च नामीत्यत्र न आमिति छेदङ्कृत्वा नान्तस्याङ्गस्याचो दीर्घः आमीति सूत्रार्थस्वीकारे नुक्यपि न दोष इति वाच्यम् । तस्य नामीति सूत्रे समाधास्यमानत्वात् ।

## बहुवचने किं रामः रामस्येति ।

अकृतव्यूहपरिभाषया राम इत्यादौ न दूषणमित्यरुचे राह—रामस्येति । अन्ये तु विसर्गे कृतेपि अस्य शर्षु पाठादकृतपरिभाषायां अप्राप्तौ द्विर्बद्धं सुबद्धमिति न्यायेन द्वयमपि दूषणमित्याहुः तदुभयमसङ्गतम् एतवशास्त्रदृष्ट्या रुत्वादीनामसिद्धत्वेन परिभाषायाः प्राप्तेरेवाभावात् प्राप्तिपूर्वकविसर्गे कृतेपीत्यस्य दूरापास्तत्वात् । न च स्वौजसित्यत्र रु औ जसिति पाठ्यम् सर्वत्र सुग्रहणे सुपि

चेत्यादौ रुग्रहणमेवास्तु, तथा च ऋल्प्रत्याहारे रेफस्य पाठाभावेन राम इत्यादौ बहुवचनग्रहणाभावे न दूषणमित्यरुचेराह रामस्येति वाच्यम्। रूपाठे राम इत्यादौ यञन्तरघटके रेफे परे रूपि चेत्यनेन दीर्घापत्तेः। नच रहयवडिति न्यासेन नोक्तदोष इति वाच्यम्। इश्प्रत्याहारे उक्तन्यासे रेफस्य पाठाभावेन कृष्णो रमते इत्यादौ हसि चेत्यनेनोत्वानापत्तेः। न च हसि चेत्यस्य स्थाने रसि चेति न्यासेन नोक्तदोषः, हरयवडिति न्यासेन च नोक्त दोष इति वाच्यम्। स्फायीति धातोः रक्प्रत्यये स्फारमित्यत्रैधेरज्ञित्यत्र च वल्प्रत्याहारे रेफस्य पाठाभावेन लोपो व्यो र्वलीति यलोपानापत्तेः। न च रलीति न्यासेन नोक्तदोष इति वाच्यम्। तत्र रलीतिन्यासे मव्यादित्यादौ वकारस्य लोपापत्तेः। न च हवरयडिति न्यासेन स्फारमित्यत्र न दोष इति वाच्यम्। अम्बामाचष्टे अम्बयतीति अम्ब् अम्बो वासः अम्बाल् इत्यत्र हलो यमां यमीति वलोपानापत्तेः। न च हलो वमां वमीति न्यासेन नोक्तदोष इति वाच्यम्। हवरयडिति न्यासे रूयादित्यादावडागमापत्तेः न च सुपि चेत्यस्य स्थाने अनाप्य इत्यत्र इव "अपि च" इति न्यासेन राम इत्यादौ रून्यासे न दोष इति वाच्यम्। रुकरणे यशोत्र, पयोत्रेत्यादौ ससजुषो रुरिति रुत्वस्यातोरोरित्युत्वं प्रत्यसिद्धत्वादुत्वानापत्तेः॥ न च ससुजुषोरुरित्यत्र रु शब्दे उकारोच्चारणसामर्थ्यात् असिद्धत्वं नेति वाच्यम्। यत्वविधौ भो भगोरित्यत्रोभयग्रहणाभावार्थं तस्य चारितार्थ्यात्। सूत्रारम्भसामर्थ्यादसिद्धत्वबाधस्तु न कल्पनीयः प्रथमैकवचने शिवोत्रेत्यादौ सूत्रस्य सावकाशत्वात्। न च देवा अत्रेत्यादावुत्वं प्रति रुत्वस्यासिद्धत्वा देवोत्वस्याप्रवृत्तिस्तपरोच्चारणं व्यर्थं तत्सामर्थ्यात् उत्वं प्रति रुत्वस्यासिद्धत्वाभाव इति वाच्यम्। प्रथमैकवचने विश्वपा अत्रेत्यादौ तपरकरणस्य चारितार्थ्यात्। न च एहि सुश्रोत अत्र स्नाहीत्यादौ रुत्वस्यासिद्धत्वादेवोत्वाभावसिद्धौ अप्लुतादिति व्यर्थन्तत्सामर्थ्यादुत्वम्प्रति रुत्वस्यासिद्धत्वाभावः कल्प्य इति वाच्यम्। अवात्सीद्धन्धुरिति भाष्यप्रयोगादसम्बुद्धावपि दूराद्धूत इत्यनेन प्लुतप्रवृत्तेरुक्तत्वेन आगच्छतु भवान् देवदत्तोहं गच्छामीत्यादौ अप्लुतग्रहणस्य चारितार्थ्यात्। देवदत्ता गतो ग्रामान् किमित्यादावनन्त्यस्यापीति प्लुतविषये तस्य चारितार्थ्याच्च। न चाप्लुत इति ससम्यन्तपदाभावे तिष्ठतु पयः अग्निरत्त इत्यत्र रुत्वस्यासिद्धत्वा-

दुत्वाभावसिद्धौ अप्लुतग्रहणसामर्थ्यात् उत्वं प्रति रुत्वस्यासिद्धत्वाभाव इति वाच्यम्। तिष्ठतु देवदत्त अग्निदत्तेत्यादावप्लुतग्रहणस्य चारितार्थ्यसम्भवात्। नचाहर्भाति, अहर्गण इत्यादीनामहन्नित्यनेन रुत्वे कृतेऽपि रुत्वस्यासिद्धत्वादुत्वाभावेन सिद्धौ रोःसुपीतिसूत्रसामर्थ्यात् उत्वं प्रति रुत्वस्यासिद्धत्वाभाव इति वाच्यम्। भो भगो इति यत्ववारणेन सूत्रस्य सावकाशत्वात्॥ नत्राहन् न्यासेन यत्ववारणं भविष्यतीति वाच्यम्। अहन् र इतिन्यासे अहःषु इत्येव रोस्सुपि सप्तमी बहुवचने रोरेव विसर्जनीयो नान्यस्येति नियमेन विसर्गस्यानापत्तेः। नचाहोरूप मित्यादौ रुत्वस्यासिद्धत्वादुत्वाभावेन रत्वरुत्वयोः विशेषाभावेन रूपरात्रिरथन्तरेषु इतिवार्त्तिकं व्यर्थम् तत्सामर्थ्यादुत्वं प्रति रुत्वस्यासिद्धत्वाभाव इतिवाच्यम्। यत्ववारणेन वार्त्तिकस्य चरितार्थत्वसम्भवेन रुत्वस्यासिद्धत्वाभावे ज्ञापकाभावात्। न च हलोऽनन्तरासंयोगान्तस्य लोपो रोरुत्व इति ज्ञापकान्नासिद्धत्वमिति वाच्यम्। प्रकरणे ङ्यापःसोरिं तिनिष्कर्षे हेप्रियचत्व इत्यत्र रात्सस्येतिनियमात्संयोगान्तलोपाप्राप्त्या रोरिति लोपे ढूलोप इतिदीर्घापत्तेः। न च तस्य निष्कर्षस्य दूषयिष्यमाणत्वादिति वाच्यम्। अनेकक्लिष्टकल्पनापेक्षया स्वौजसित्येव वक्तव्यत्वात्॥ एतेन सदाशिवभट्ट्याम् प्रकरणे यशोत्र पयोत्रेत्यादौ हलोनन्तरा इति निर्देशेन असिद्धत्वाभावेनोत्वम् तेन राम इत्यादौ बहुवचनग्रहणाभावे न दोष इति यदुक्तं तदसङ्गतम् तस्मात् बहुवचनग्रहणाभावे राम इत्यत्र दूषणं बोध्यमित्यन्यत्र विस्तरः। न च बहुवचनग्रहणाभावे राम इत्यत्र यद्येत्वं स्यात्तर्हि एङन्तत्वादेवेष्टसिद्धिः ह्रस्वग्रहणं व्यर्थम् तत्सामर्थ्यात् राम इत्यादावेत्वस्य बाध इति वाच्यम्। हे नदि हे लक्ष्मि इत्यादौ ह्रस्वग्रहणस्य चारितार्थ्यसम्भवात्। नच "इदुदेङ्सम्बुद्धेः" इतिन्यासेनोक्त लक्ष्यसिद्धिरिति वाच्यम्। एवमपि हे वधु इत्यादीनामसिद्धेः। नचेदुदेङ्सम्बुद्धेरितिन्यासेन तस्यापि सिद्धिरिति वाच्यम्। तथापि हे ज्ञानेत्यादीनामसिद्धेः। न च इदुदेङ्सम्बुद्धेः ततः अम् इति न्यासेन सम्बुद्ध्यवयवमकारस्य लोप इत्यर्थेनेष्टसिद्धिरिति वाच्यम्। एवमपि हे कुण्ड इत्यादौ सुलोपानापत्तेः। न च तत्रापि झल्येदित्यस्य दुर्वारतया एङन्तत्वादेव सिद्धिरिति वाच्यम्। अम्बार्थे ह्रस्व विधानसामर्थ्यात् तत्रैत्वस्य बाधात् अन्यथा रमे इतिवत् सम्बुद्धा वित्यनेनैव

सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। न च तत्र सकारं प्रश्लिष्य समाहारद्वन्द्व-निर्देशे सकारस्यापि तेन लोपविधानादिति वाच्यम्। एवं पन्था इत्यत्रापि सकारस्य लोपापत्तेः। न च मकारसाहचर्य्येण ह्रस्वात् परस्यैव लोपः, किञ्च हे अम्ब इत्यादौ प्रथमं हलङ्यादिलोपः पश्चात् ह्रस्वः, न च ह्रस्वो नित्यः, लोपस्यान्तरङ्गत्वात्, अम्बार्थात् ङःनद्योः ह्रस्व इतिन्यासाच्च नोक्तदोष इतिवाच्यम्। अनेकज्ञापकापेक्षया बहु-वचनग्रहणाऽभ्युपगमस्यैवौचित्यात्॥

केचित्तु अत्र बहुवचनग्रहणं न कार्य्यम्। झल्येदित्येव सूत्रमस्तु झलादौ सुपि परे एत्वं स्यादिति तदर्थः। स्वौजसित्यत्र रुन्यासेन एङ्ह्रस्वादित्यत्र ह्रस्वग्रहणसामर्थ्येन च बहुवचनग्रहणाभावे सौ परे राम इत्यादौ न दोषः, नचैङःपदान्तात्परोरुरस्तीति भाष्यात्। अतोम् इति सूत्रारम्भसामर्थ्याच्च प्रत्ययः इत्यादि निर्देशेन च क्वचिद् त्रिपाद्याः असिद्धत्वं नेति ज्ञापनेन च तदभावे राम इत्यत्र न दूषण-मित्यरुचेराह रामस्येति। अत एव बहुवचने किं रामस्येत्येव शेखरे पाठः। तस्माद् बहुवचनग्रहणाभावे राम इत्यादौ दोषाभावेन बहुवचनग्रहणं व्यर्थमेव।

न च बहुवचनग्रहणाभावे रामस्येत्यादौ वेत्वं स्यादिति वाच्यम्। टाङसिङसामिनात्स्याः इतिन्यासात्। न च अस्येतिन्यासे अस्ये-त्यादौ अनादेशस्स्यादिति वाच्यम्। आपि लोपोकः अनटौ सोरिति न्यासात्। न च तदभावे सर्वस्मिन्, सर्वस्माद्, सर्वस्मै इत्यादावेत्वं स्यादिति वाच्यम्। पूर्वसूत्रेष्विव तत्राप्यकारकरणेनादोषात्॥ न च चतुर्षु सूत्रेष्वकारकरणे गौरवमिति वाच्यम्। टाङसिङसामिनाद् स्या इति सूत्रस्याग्रे अटश्चेति न्यस्य ङ्सस्यादेशः अट्चेति तदग्रे सर्वनाम्नःस्मै, ङसिङ्योस्स्मात् स्मिनौ चेतिपाठात्॥ न च स्वविधे-यस्यादेरट्विधावुद्देश्यत्वं न स्यादिति वाच्यम्। शब्दानामनादि-त्वात् एतेन बहुवचनग्रहणाभावे रामस्येत्यत्र दोषाभावेन बहुवचन-ग्रहणं व्यर्थमेवेत्यरुचेराह–बहुवचने किं रामाभ्यामिति शेखरे पाठः। न च बहुवचनग्रहणाभावे रामाभ्यामित्यादा वेत्वं स्यादिति वा-च्यम्। सुपि चेति सूत्रारम्भसामर्थ्याच्छ्यावृत्तेः। न च रामायेत्यादौ चरितार्थमिति वाच्यम्। ङेरय इतिन्यासेनोक्तप्रयोगसिद्धौ सूत्रवै-यर्थ्यस्य तादवस्थ्यात्। न चोत्तरसूत्रे सुपिचेत्यस्य सम्बन्धाभावे एचव्व-मित्यत्रैत्वं स्यादिति वाच्यम्। तत्रैत्वनिवारणार्थं झल्येदित्यस्य

स्थाने "सभ्येद्" इतिन्यासेन सादौ भादौ प्रत्यये परे एत्वं स्यादित्यर्थेन निर्वाहात्। न चैवं पचस्वेत्यादावेत्वं स्यादिति वाच्यम्। 'सभ्येदतिङ्' इतिन्यासात्। भादिसाहचर्य्येण सादिरपि सुप्येवेतिग्रहणाच्च। सुपिचेत्यस्य स्थाने 'ङेभ्याम्' इतिन्यासेनास्य विशेषविहितत्वेन तदभावे रामाभ्यामित्यादावेत्वस्यापवादत्वाच्च। न च घेर्ङिति, इत्यत्र सुपीत्यनुक्तौ पट्वीत्यादौ गुणापत्तिरिति वाच्यम् घिसंज्ञकस्य गुणस्स्यात् ङिति विभक्तावित्यर्थात्। न विभक्तावित्यतः विभक्तावित्यनुवर्तनात्। किञ्च स्त्रीप्रत्यये ओर्गुणाभावाय यूनस्तिरित्यतः प्राक्ताद्धिताधिकारेण स्त्रीप्रत्यये गुणाभावबोधनात्।

अन्यच्च स्त्रियाम् इत्यधिकारादग्रे तद्धिताधिकारेण 'प्राचां ष्फस्तद्धितः' इत्यत्र तद्धितग्रहणस्य 'यस्येति च' इत्यत्रेकारग्रहणस्य 'औङः स्याम्' इति वार्त्तिकस्य चाकरणरूपस्य महतो लाघवस्यापि सम्भवात् तत्र करणं व्यर्थं स्पष्टमेव। नच उक्ततद्धितग्रहणस्य फलं न प्रातिपदिकसंज्ञाद्वारा ङीप्सिद्धिः षित्वादेव तस्य सिद्धेः, नापि 'यस्येति च' इति लोपः सवर्णदीर्घेणापि रूपसिद्धेः, किन्त्वन्यतोऽप्ययमिति ज्ञापनद्वारा यस्येति चेति लोपार्थं तेनासुरिशब्दादपि ष्फे आसुरायणीत्यस्य सिद्धेः फलस्य सत्त्वेन कथं तद्धितग्रहणाकरणरूपं लाघवमिति वाच्यम्। तेन फड्विधानेऽपि डित्त्वाट्टिलोपेन डित्त्वफलद्वयार्थ्यन्यत्रैव सत्त्वेनान्यतोऽपीति ज्ञापनेन चेष्टसिद्धेः। नच गोकक्षशब्दाद् गर्गादित्वाद्यञि ततः क्रौड्यादित्वेन ष्यङि चापि प्रकृतसूत्रेण ष्फप्रत्यये चिकीर्षिते भस्याढे इति पुम्वद्भावे गौकक्ष्यशब्दाद्यञन्तात् ष्फे गौकक्ष्यायणीति सिद्ध्यति तद्धितसंज्ञाभावे पुम्वद्भावाप्राप्त्या यञन्तत्वाभावेन ष्फो न स्यादिति वाच्यम्। क्रौड्यादिषु गौकक्ष्यशब्दस्य पाठाभावेऽपि क्षत्यभावात्। चाप् तु 'षाद्यञश्चाब्वक्तव्यः' इत्यनेनैवोदीचाम्मते, प्राचां मते तु चापो बाधस्यापि विषये सर्वत्रग्रहणापकर्षात् ष्फे गौकक्ष्यायणीत्यस्य सिद्धेः। न च ङीबादीनां तद्धितत्वेऽतद्धित इति पर्युदासात् लशक्वतद्धिते इत्यनेन ङीबादेर्ङकारस्येत्वानापत्तिरिति वाच्यम्। चुटू, इत्यत्र 'चुटुङ्' इति न्यासेन तत्सिद्धेः। टीपितिन्यासाच्च। न च श्वुनीत्यादावतद्धित इति पर्युदासात् 'श्वयुव' इति सम्प्रसारणं न स्यादिति वाच्यम्। तदग्रे 'स्त्रीप्रत्यये च' इति न्यासेनेष्टसिद्धेः। न च दण्डिनीत्यादौ

ऋन्नेभ्यः' इति ङीपि 'नस्तद्धिते' इति टिलोपापत्तिरिति वाच्यम्। 'डाबुभाभ्याम्' इति सूत्रे डाप्रत्यये डित्वसामर्थ्यात् स्त्रीप्रत्यये तद्धितनिमित्तकटिलोपाभावज्ञापनात्। न च शकन्धूः कर्कन्धूरित्यादावूङि 'ओर्गुणः' इतिगुणापत्तिरिति वाच्यम्। तत्र ऊङ् इति न्यासमाश्रित्य गुणाभावज्ञापनात्। न च नद्याः अः नद्यस्तमिच्छतीति विग्रहे क्यचि तस्मिन् परे स्थानिवद्भावेन यकारे तद्धितत्वमाश्रित्य 'क्यच्व्योश्च' इति लोपापत्तिरिति वाच्यम्। नागेशीयसिद्धान्तेऽनल्विधाविति निषेधात्। ङीप ईकारस्य तद्धितत्वेन तत्स्थानिकयस्य स्थानिवत्त्वेन तत्त्वेऽप्यपत्यार्थकत्वाभावाच्चेति तत्त्वम्। एतेन बहुवचनग्रहणाभावे रामाभ्यामित्यादौ दोषाभावेन बहुवचनग्रहणं व्यर्थमेवेत्याहुस्तन्न बहुक्लृप्तकल्पनापेक्षया बहुवचनग्रहणस्य कर्त्तव्यत्वात्।

अत्र 'बहुवचने झल्येत्' इति न्यासे 'रामेभ्य इत्यादाविकि आद्गुण इति गुणेन निर्वाहेऽपि 'सम्बुद्धौ च' इत्यत्रापीकः सम्बन्धे हे रमे इति न सिद्ध्येत् इकि रमा इ सु इति दशायां पूर्वं पूर्वमन्तरङ्गमिति न्यायेन पूर्वं गुणे एङन्तत्वात् सम्बुद्धिलोपे इष्टसिद्धावपि वार्णादाङ्गमिति परिभाषयाऽऽद्गुणादपि पूर्वं 'ह्रस्वस्य गुणः' इतीकारस्य गुणे सम्बुद्धिलोपे आकारैकारयोर्वृद्धौ हे रम इत्यस्यासिद्धेः। सम्बुद्धौ च, इत्यत्र विषयसप्तमीस्वीकारे विभक्त्युत्पत्तेः पूर्वमेवेकि गुणेऽत्र निर्वाहेऽपि ज्ञानयोरिति न सिद्ध्येत् 'ओसि च' इत्यत्रापीकः सम्बन्धादिकि ज्ञान इ ओसिति स्थितावन्तरङ्गमपि गुणं बाधित्वा 'वार्णादाङ्गम्' इति न्यायेन नुम एव प्रथमप्रवृत्तेः। न च समाननिमित्तकत्वरूपसमानाश्रयत्वे एवास्य न्यायस्य प्रवृत्त्या न दोष इति वाच्यम्। ह्यायेयेषेत्यादिमुख्योदाहरणस्यैवासिद्ध्यापत्त्याऽऽङ्गवार्णयोः समानकार्यित्व एव तत्प्रवृत्तिस्वीकारात्। तत्त्वं च वार्णशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयवृत्तिपर्याप्तोपस्थितीयमुख्यविषयताप्रयोजकपदघटितत्वम्। इहापि गुणशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयताश्रयेकारवृत्तिपर्याप्तोपस्थितीयमुख्यविषयताप्रयोजकैकपदघटितत्वेन तत्त्वात्। एतेनेह 'वार्णादाङ्गम्' इत्यस्याप्रवृत्तेरन्तरङ्गत्वात् पूर्वं गुणेनेष्टसिद्धिरिति मन्दोक्तमपास्तम्। न चैतदर्थमिडेवास्तु विभक्त्यवयवे तस्मिन् इगन्ताङ्गत्वाभावाद् नुमोऽप्रसक्त्या तत्सिद्धावपि गङ्गे रमे इत्यादौ पूर्वं गुणेऽपि पञ्चमीसमाश्रयणात् स्थानिवद्भावेनेकारव्यवधानात् सम्बुद्धिलोपानापत्तेः।

हल्ङ्यादिलोपेऽपि न स्थानिवत्त्वेनेकारव्यवधानात् । पञ्चमीस-मासस्यानित्यत्वेन भाष्ये प्रत्याख्यानाद्वा तस्य सिद्धत्वेऽपि निर्जरेभ्य इत्यादाविटि अन्नादिविभक्त्यव्यवहितपूर्वत्वेन जरसादेशापत्तेः । सन्निपातपरिभाषया तस्य सुसमाधेयत्वेऽपि उपेद्ध इत्येतद्विषये 'न धातुलोपार्धधातुके' इत्यत्रत्यभाष्योक्तस्यार्थवद्द्वयसम्बन्धिवर्णद्वया-पेक्षत्वरूपबहिरङ्गत्वस्य गुणे अर्थवदेकसम्बन्धिवर्णद्वयापेक्षत्वरूपम-न्तरङ्गत्वस्य यणि सत्त्वेन बहिरङ्गत्वासमानाधिकरणान्तरङ्गत्वस्यैवा-सिद्धतानियामकत्वेन गुणे तत्समानाधिकरणस्यैव तत्त्वस्य सम्भ-वाद्गुणदृष्ट्या यणः सिद्धत्वेनास्यान्तरङ्गत्वस्य सर्वापेक्षया प्राब-ल्याद् यण्येव सत्त्वेन च गुणात् पूर्वं यणि रमया रमयोरित्यनिष्टा-पत्तेस्तदवस्थत्वात् । न चोक्तभाष्यात् पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वं बहिरङ्गत्वं पदैकसम्बन्धिवर्णापेक्षत्वमन्तरङ्गत्वमित्यस्यैव स्वीकारेण प्रेद्ध इत्यादौ सामञ्जस्ये रमया रमयोरित्यादौ पदद्वयाभावाद् गुण-स्योक्तबहिरङ्गत्वाभावेन नातिप्रसङ्ग इति वाच्यम् । प्रेद्ध इत्यादावपि 'गतिकारकोपपदानाम्' इतिन्यायेन सुबुत्पत्तेः पूर्वमेव समासे गुणस्य पदद्वयसम्बन्धित्वाद्युक्तबहिरङ्गत्वाभावेनोक्तभाष्यस्यासाम-ञ्जस्यादुक्तान्तरङ्गत्वबहिरङ्गत्वे एव तत्तात्पर्यात् दोषतादवस्थ्यस्य सम्यक्त्वात् । किञ्च जि-धातोरचि तत आचारक्विबन्ताद्विच्यल्लोपयो-र्भ्यसि जभ्य इत्यत्र यकारोत्तराकारस्यैत्वे कर्तव्येऽल्लोपस्य स्थानि-वत्त्वेनाकारव्यवधानात् लोपोद्देश्यस्यैत्वे स्वविधौ स्थानिवत्त्वा-भावाच्चेत्वं न भवति इटि तु अदन्तात् परस्य भ्यसः सत्त्वेन पञ्च-मीसमासेन स्थानिवद्भावेऽप्यकारान्तात् परत्वेन स्यादिति दोषस्य सत्त्वात् । यत्तु इटि कृते एभ्य इत्यादौ हलादिविभक्तिपरत्वाभावा-दिदो लोपो न स्यादित्युक्तं तन्न, 'हलि लोपः' इत्यत्र हलग्रहणा-भावेऽपि 'अनाप्यकः' इत्यत्र 'अनटौसोरकः' इति न्यासे टायामोसि चानादेशेनान्यत्र टादौ लोप इति लोपेनापीष्टसिद्धेः । नचौकारादावपि लोपप्रवृत्त्याऽनिष्टापत्तिरिति चेत् 'दश्च' 'इदोऽय् पुंसि' इत्याद्यारम्भादौ-करादौ तदप्रवृत्तेः । यत्त्वत्र 'अलावेत्' इति न्यासं कृत्वा सुपि चेत्यतः सुपीत्यनुवर्त्य सुभिन्ने सुप्यदन्ताङ्गस्येत्वमिति व्याख्यानेन रामेभ्य इत्यादाविष्टसिद्धिः । पर्युदासे व्यवायेष्वित्यादिनिर्देशात् प्रथमाद्ये-कवचनस्यैव सोर्ग्रहणेन सप्तमीबहुवचने व्यावृत्तिं कुर्वन्ति अजादा-वपि प्राप्तिमाशङ्क्य 'ओसि च' इति सूत्रारम्भादजादौ चेदीत्स्येवेति

नियमेन वारयन्ति। भिस्यैसादेशात् प्राक् प्राप्तावदन्ताङ्गत्वाभावेनै-स्विधानस्यैव वैयर्थ्यात् विभक्तिस्थानिककार्यस्यान्तरङ्गत्वाद्वा प्रथम-मैसादेशे ततः ( सन्निपात ) परिभाषया ओसि च इति नियमेन च दोषाभावः। भ्यामादौ सुपि चेत्यस्यारम्भादेव दीर्घः सप्तमीबहुव-चनादाविष्टमेव । वस्तुतस्तु 'एत्' इत्येव सुवचम् प्रथमैकवचने एङ्ह्रस्वादित्यत्रत्यह्रस्वग्रहणसामर्थ्यान्नैत्वम् । हे लक्ष्मि हे वध्वित्यस्य ह्रस्वग्रहणफलत्वे तु 'इदुदेङः सम्बुद्धेः' इत्येव' वदेदिति वदन्ति तन्न, भ्यामि यथान्यासे परत्वादेत्वमिष्टमिदानीं 'सुपि च' इत्यस्य निरवकाशत्वेनापवादत्वात् सर्वेषां रामेष्वित्यादौ सावकाश-स्यैत्वस्य भ्यसि दीर्घेण बाधापत्तेः । रामाणामित्यादावपि (सन्नि-पात ) परिभाषाया अनित्यत्वेनैत्वापत्तेश्चेति ॥ परे तत्रैव 'स्येत्' इति सुवचमित्याहुः । तेषामयमाशयः । 'सुपि चेत्यतः सुपी-त्यनुवर्त्य सादौ भादौ च सुप्येत्वमित्यर्थेन सारसायनभक्तः प-चस्वेत्यादौ दोषाभावेन बहुवचनग्रहणाभावे रामो रामस्येत्यादावपि न दोषः। यतो भादिसाहचर्येणैकवचनभिन्नस्य सादेः तादृशसादि साहचर्येण द्विवचनभिन्नस्य भादेः परस्परसाहचर्येण ग्रहणादर्थाद् बहुवचन एव प्रवृत्तेर्दोषाभावेन महल्लाघवमिति। यत्तूक्तन्यासे पच-ध्वमित्यत्र सादिभादिप्रत्ययपरत्वाभावेन तद्व्यावर्त्तकसुपीत्यनु-वृत्तिरपि मास्तु । न च 'क्रियासमभिहारे लोट्' इति ध्वम्-विषये स्वादेशे पचस्वेत्यादौ सादिबहुवचनस्य सत्त्वेनैत्वापत्तिरिति वाच्यम् । तिङतिरिक्तभादिसाहचर्यात् सादेरपि तिङतिरिक्तस्य तस्य द्विवचनभिन्नस्यैव सम्भवाद् भादेरपि तादृशस्यैव ग्रहणं स तु बहुवचनसुबेव तत्साहचर्याद्बहुवचनसुप एव सादेर्ग्रहणात् पचस्वेत्यत्र प्रथमैकवचने च द्विवचने भ्यामादौ च दोषाभावेन 'सुपि च' इत्यत्रापि 'ङ्भ्याम्' इति न्यासेन सुपिग्रहणं गता-र्थमिति सुधियो विभावयन्तु । यत्तु 'सुटतिथोः' इत्यादाविका-राद्युच्चारणेन न पुनरन्तरेणाचमिति उच्चैरुदात्त इति सूत्रस्थभा-ष्येण शास्त्रबोधिताज्व्यवहितहल्समुदायस्यासाधुत्वबोधनादेतादृश-न्यासस्यैवासाधुत्वमित्युक्तं तन्न, न्यासकर्त्तुः सति लाघवे पाणिनि-नैवमेव कुतो न कृत एतदभिप्रायेण पाणिन्युक्तस्य च शास्त्रबोधि-तत्वेन स्कोरित्यादितत्प्रयोगस्य सत्त्वेन चास्यापि सौत्रत्वेन स-धुत्वात्। स्वाव्यवहितत्वसम्बन्धेनाज्विशिष्टहल्समुदायस्यासाधुत्वे

एव पूर्वोक्तभाष्यादितात्पर्येण 'सुपि च' 'बहुवचने' इति संहितापाठे चकारोत्तराकारस्योत्तरैकारवैशिष्ट्यस्य च सम्भवात् सकारभकाररूपहलसमुदायस्य साधुत्वाच्च ।

## प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ।

नन्वत्र पूर्वग्रहणं न कार्य्यम् । न च पूर्वग्रहणाभावे कादिति पञ्चमीं श्रुत्वा तस्मादित्युत्तरस्य, इत्युपस्थितेः परस्येति लाभे ककारादुत्तरस्याकारस्येत्वं स्यादापि परे इत्यर्थे सर्विकादौ परत्वात् टाबेकादेशं बाधित्वा ककारादुत्तरस्याकारस्येत्वापत्तिरिति वाच्यम् । पूर्वग्रहणाभावे कादिति पञ्चम्या परस्येतिलाभेऽपि सर्विकादौ ककारादुत्तरस्याकारस्येत्वात् पूर्वमन्तरङ्गत्वात् पूर्वमन्तरङ्गत्वात् टापा सह सवर्णदीर्घे ककारात्परभूतह्रस्वाकाराभावेन, स्वविधौ स्थानिवत्त्वाभावेन, आप्त्वन्तु परादिवद्भावेनैवेति, अन्यथैव पूर्वाकारस्यैत्वं सिद्धम् पूर्वग्रहणं न कार्य्यमित्याशयात् ।

न च पूर्वग्रहणाभावे उक्तरीत्या परस्येतिलाभे सर्विकादौ अङ्गावयवप्रत्ययघटकककारादुत्तरस्याकारस्यापा सह सवर्णदीर्घात् पूर्वं वार्णादाङ्गस्य बलीयस्त्वेन, अङ्गावयवप्रत्ययघटक ककारदुत्तरस्याकारस्यैत्वं स्यादापि परे इत्यर्थकस्य सूत्रस्य येननाप्राप्तिन्यायेनापवादत्वेन, च तत्र परस्याकारस्येत्वं स्यादिति वाच्यम् । पूर्वग्रहणाभावे परस्येतिलाभे उक्तन्यायेन सूत्रस्यापवादत्वेन च सर्विकादौ पराकारस्येत्वे, सूत्रे अदितिकरणं व्यर्थं स्यात् प्रत्ययघटकककारात्परीभूताप्परकह्रस्वस्यैव सम्भवात् तत् सामर्थ्यात् कल्प्यते अत्रत्यपञ्चम्या परस्येत्वंशस्य न लाभः किन्तु पूर्वस्यैवेति पूर्वग्रहणं न कार्य्यमित्याशयात् । न च पचतु इति तिङन्तात् अकचि पचतकु, अ इवाचार अ, पचतकु अ यस्यां क्रियायामिति विग्रहे आख्यातमाख्यातेन समासे पचतक्वेत्यादौ ककारादुत्तरस्य वकारस्येत्ववारणायातद्ग्रहणस्य चारितार्थ्यसम्भवेनोक्तार्थे ज्ञापकाभावेन पूर्वग्रहणाभावे परस्येतिलाभे उक्तदोषस्य तादवस्थ्यात् पूर्वग्रहणं कर्त्तव्यमेव, न चेत्वे कर्त्तव्ये टाबेकादेशस्याचःपरस्मिन्निति स्थानिवद्भावेनाकारेण व्यधानादापिपरे ककारादुत्तरस्य वकारस्येत्वं न स्यादि वाच्यम् । न पदान्त, इति सूत्रेण निषेधादिति वाच्यम् ।

पूर्वग्रहणाभावे उकरीत्या पराकारस्येत्वे सूत्रे तपरोच्चारणं व्यर्थं स्यात् ककारात्परात्परकह्रस्वाकारस्यैव सम्भवेन रांकेत्यादौ दोषाभावात्, तत्सामर्थ्यादनुमीयते अत्रत्यपञ्चम्या परस्येत्यंशस्य न लाभः किन्तु पूर्वस्यैवेति पूर्वग्रहणं न कार्य्यमित्याशयात्। नच भविता इति तिङन्तात् अकचि भवितका, अ इवाचरअ, भवितका अ यस्यां क्रियायामिति विग्रहे आख्यातमाख्यातेनेति समासे भवितकेत्यादौ ककारादुत्तरस्य दीर्घाकारस्येत्ववारणाय तपरस्य चारितार्थ्येनोक्तज्ञापकासम्भवेनोक्तदोषस्य सत्त्वात् पूर्वग्रहणं कर्त्तव्यमेव, न च टापा सहैकादेशस्याचः परस्मिन्निति अकारेण व्यवधानात् न दीर्घाकारस्येत्वमिति वाच्यम्। न पदान्तेति निषेधात्। न च भवितकेत्यत्र भवितका अ इत्यवस्थायां टापः पूर्वमकःसवर्णे इति परत्वात् दीर्घेऽदन्तत्वाभावेन टावेव न तर्हि कथमित्वमिति वाच्यम्। विभाषेति प्लुते प्रकृतिभावेन दीर्घनिषेधात्। पूर्वान्तवद्भावेनादन्तत्वं तु न अनल्विधित्वात् प्रकृतिभावेन यथा दीर्घस्य बाधस्तथा इत्वस्य बाधस्तु न यन्निमित्तकप्रकृतिभावस्तन्निमित्तककार्य्यस्यैव बाधात् अत्र त्वापुन्निमित्तकमित्वम्, अनिमित्तकः प्रकृति भावः न च प्रकृतिभावोऽपि एकादेशे अनिमित्तक इति वाच्यम्। स्थानिवद्भावेन भवितका अ आ इत्यवस्थायां प्रकृतिभावस्य अनिमित्तकत्वात्।

न पदान्तेति निषेधस्तु न, प्रकृतिभावस्यानुवादमात्रत्वेनापूर्वविधेयत्वाभावादिति वाच्यम्। तत्र पूर्वशब्दाभावे कादिति पञ्चम्युपपत्तये दिक्वाचकशब्दाध्याहारप्रसङ्गे कदाचित् पूर्वशब्दाध्याहारेण सर्विकादौ तदभावेपि पूर्वाकारस्यैवेत्वं स्यात् अधिकं पूर्वग्रहणं न कार्य्यमिति प्रश्नात्। न च पूर्वग्रहणाभावे कदाचित् पूर्वशब्दाध्याहारे सर्विकादौ पराकारस्येत्वे पाक्षिको दोषः, किञ्च पूर्वग्रहणाभावे उकरीत्या परशब्दाध्याहारेण कटुकेत्यत्रोत्तरस्याकारस्य सर्वथेत्वमनिष्टं स्यादत्र पूर्वाकारस्यासम्भवः। अत एव कौमुद्यां पूर्वग्रहणाभावे कटुकेत्यत्र पराकारस्य सर्वथेत्वमनिष्टं स्यादिति दर्शितमिति पूर्वग्रहणं न कर्त्तव्यमिति वाच्यम्। उदीचामिति सूत्रे अनुवर्तमानं कादिति ककारनिष्ठपूर्वत्वनिरूपितावधित्ववाचकम्। अन्यथा तत्रत्ययकेत्यत्र यो यकार स्तत्पूर्वस्य कात्परत्वासम्भवः स्यात्, यकः ककारस्तदुपादानं व्यर्थं स्यात् कंकारपूर्वस्य कात्परत्वानपायात् नित्यं क्रीडाजीविकयोरिति निर्देशा च्चात्र पूर्वग्रहण-

भावेपि कादिति पञ्चम्यन्तं न परत्वनिरूपितावधित्वविशिष्टवाचकम् किन्तु पूर्वत्वनिरूपितावधित्वविशिष्टवाचकमिति विभाव्यते तदा पूर्वग्रहणं न कार्य्यमित्याशयादिति चेन्न । अनेकक्लिष्टकल्पनापेक्षया पूर्वग्रहणस्य स्पष्टार्थत्वमिति स्वीकारात् ।

## यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।

अत्र विधिग्रहणं न कार्य्यम् ।

यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गम्, इत्येव सूत्रमस्तु । नच विधिग्रहणाभावे दिग्योगपञ्चम्या यस्मात्प्रत्ययः पर स्तस्मिन् प्रत्यये परे तदाद्यङ्गमित्यर्थे स्त्री इयतीत्यत्र स्त्रीशब्दात् वतुपः परत्वात् तस्मिन् परे स्त्रीशब्दस्याङ्गसंज्ञायां स्त्रिया इति सूत्रेणेयङ् स्यात् । सति च विधिग्रहणे ल्यब्लोपे, इतिपञ्चमी यमुद्दिश्यविहित इत्यर्थाद्यःप्रत्ययो यन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयस्तस्मिन् प्रत्यये परे, तदादेः तत् पदेनोद्देश्यताश्रयस्य परामर्शादुद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपकसमुदायस्येत्यर्थात् इयनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वस्य स्त्रीशब्देऽभावात् न दोषः । न च सति विधिग्रहणे सुनिरूपिताङ्गत्वस्य स्त्री शब्दे सत्त्वेनेयति परे इयङादेशो दुर्वार इति वाच्यम् । प्रत्यासत्त्या अजादिप्रत्यये इयङादेशस्तन्निरूपिताङ्गस्य विवक्षितत्वात् नचेयङि कर्त्तव्ये इकारलोपस्य स्थानिवत्त्वेनेकारव्यवधानात् विधिग्रहणाभावे न दोष इति वाच्यम् । वाक्यसंस्कारपक्षे एवं वारणेपि पदसंस्कारपक्षे पूर्वत्वेनादृष्टत्वात् स्थानिवत्त्वाभावेन दोषस्य सत्त्वात्, न पदान्तेति निषेधाच्च । न च वाम्शसोः इत्युत्तरसूत्रसाहचर्य्येणेयङ्विधायकस्याप्यजादौ सुप्येव प्रवृत्तेः स्त्रीयतीत्यत्र न दोष इति वाच्यम् । सूत्रान्तरसाहचर्य्यस्य भाष्यादाववहेलनात्, तस्मात्विधिग्रहणाभावे स्त्रीयतीत्यत्र दूषणमस्त्येवेति वाच्यम् । यस्येति लोपस्याभीयत्वेनासिद्धवदत्राभादिति सूत्रेणेकारस्यासिद्धत्वेन व्यवधानात् विधिग्रहणाभावेपि तत्रादोषात् ।

न च यस्येति लोपापेक्षया स्त्रिया इति सूत्रेऽधिकस्य स्त्रीशब्दापेक्षत्वस्य सत्त्वेन समानाश्रयत्वाभावेन नासिद्धत्वमिति वाच्यम् । कार्य्यमनुभवन्, इति परिभाषया स्त्रीदमूशब्दयोर्निमित्तत्वाभावाद्वैशिष्टस्य तुल्यत्वात् ।

न च विधिग्रहणाभावे उक्तार्थे वासुदेवार्थक अशब्दात् औवि-भक्तौ वृद्धौ स्त्री औ इत्यत्र पूर्वान्तवद्भावेन सुप्त्वात् दोषः, किञ्च विधिग्रहणाभावे भनक्तीत्यादौ श्नमादिपरे भ इत्येतावन्मात्रादेरङ्गत्वे अतो दीर्घो यञीति सूत्रेण दीर्घापत्तिः, नचात्रापि भूसुवोरिति सूत्रात् तिङमनुवर्त्य यञादिसार्वधातुके तिङि दीर्घविधानेन नोक्त-दोष इति वाच्यम्। ज्ञाजनो र्जा इति सूत्रस्थभाष्यविरोधात्। तत्र हि जानातीत्यादौ ह्रस्वविधानेऽपि अतो दीर्घ इति दीर्घं रूपसिद्धौ दीर्घोच्चारणमङ्गवृत्तपरिभाषाज्ञापनार्थमित्युक्तम्, तिङोऽनुवृत्तौ श्नाप्र-त्ययस्य तिङ्त्वाभावेन भाष्यविरोधः स्फुट एव, तथा च भनक्तीत्यत्र दूषणमस्त्येव। किञ्च तदभावेऽभनगित्यत्राकचि परेऽभन इत्यस्या-ङ्गत्वेन 'अल्लोपोऽनः' इत्यकारलोपापत्तेः। 'अल्लोपोऽनोऽनाके' इति न्यासेन वारणेऽपि लाघवाभावात्। अ-शब्दात् औ विभक्तौ वृद्धौ औ इति वारि औ इत्यत्रान्तादिवद्भावेन औ इत्यस्मिन् विभक्तित्वेन तस्मिन् वारीत्यस्याङ्गत्वे इकोऽचीति नुमापत्तेश्च। न च 'इकोऽचि' इति सूत्रे सुपोऽनुवृत्त्यैव सिद्धे विभक्तिग्रहणमनतिदिष्टविभक्तिग्र-हणार्थमिति प्रकृते तत्त्वस्यातिदिष्टस्यैव सत्त्वादिति वाच्यम्। विधिग्रहणाभावे तदादीत्यस्यापि वैयर्थ्येन विधिशब्दाध्याहारात् 'ल्यब्लोपे' इति पञ्चम्येवेति तेन ज्ञापनेनोक्तार्थस्यैव दर्शितरीत्या लाभसम्भवेनादोषात्। तदादिग्रहणं हि करोमीत्यादौ विकरणवि-शिष्टस्याङ्गसंज्ञार्थं इदानीं मिप्प्रत्ययस्य विकरणविशिष्टात् परत्वेन तस्मिन्नङ्गसंज्ञासिद्धेति तद्वैयर्थ्यं स्पष्टमेव। न च विधिग्रहणाभावे व्याप्तिन्यायाद्यः प्रत्ययो यस्माद्विधीयते तदादि यस्मिन् कस्मिंश्चित् प्रत्यये परतोऽङ्गसंज्ञकमित्यर्थे देवदत्त ओदनमपाक्षीदित्यादौ देवद-त्तोत्तरं सुपो विधानात् देवदत्तादेः पच्छब्दान्तस्य लुङ्यङ्गसंज्ञायां देवदत्तात् पूर्वमड्डापत्तिः पुनर्विधिग्रहणे तु सामर्थ्यात् प्रत्यासत्त्या यस्माद्यः प्रत्ययः क्रियते तस्मिन्नेव प्रत्यये तदाद्यङ्गसंज्ञमित्यर्थेनादोषा-दिति वाच्यम्। तदादिग्रहणसामर्थ्याद्विधिरित्यस्याध्याहारेण पञ्च-म्यां यन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयो यस्तदादि तत्पदेनोद्देश्य-ताश्रयस्य यत्पदेन धृतस्य परामर्शात् प्रत्यये परेऽङ्गमिति तस्मिन्नेव प्रत्यये यस्मिन् कस्मिन् वेति जिज्ञासायां प्रत्यासत्त्या तस्मिन्नेवेत्यर्थ-स्य पुनर्विधिग्रहणाभावेऽपि लाभे बाधकाभावात् अतः विधिग्रहणं व्यर्थमिति चेन्न। अनेकज्ञापकापेक्षया विधिग्रहणकरणस्यैवौचित्यात्।

नन्वत्र द्वितीयप्रत्ययग्रहणं न कार्य्यम्। यस्मात् प्रत्ययविधिस्तदाद्यङ्गमित्येव सूत्रमस्तु। न च प्रत्ययग्रहणाभावे तदादिरूपं क्रियत् इत्यपेक्षायामवधित्वाभावेन निरवधिकाङ्गसंज्ञायाम् प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा, अङ्गसंज्ञा स्यात्, तथा च ससहाये व्यपदेशिवद्भावाप्रवृत्त्या रामैत्यस्यानङ्गत्वेनाकारान्तादङ्गात्परस्य भिसोऽभावेन रामैरित्यादौ, अतोभिसैसिति न स्यात् एवं व्यपदेशिवद्भावाप्रवृत्त्या श्रीत्यस्यानङ्गत्वेन श्रियावित्यादावियङ् न स्यात्; भवामि भविष्यामीत्यादौ दीर्घापत्तिश्च न स्यादिति वाच्यम्। अतोभिसैसित्यादिसूत्रारम्भसामर्थ्येन अङ्गावयवो योऽत् तत्परस्य भिसः ऐस् स्यादित्यादिक्रमेण वैयधिकरण्यान्वयेन तत्तत्सूत्राणामर्थ स्वीकारेणादोषात्। नचोक्तार्थे ब्राह्मणभिस्सेत्यादावप्येत्वं स्यात्; किञ्च प्रत्ययग्रहणाभावे जुहोतीत्यत्र गुणो न स्यात् सूत्रारम्भसामर्थ्येन वैयधिकरण्यान्वयस्तु न वाच्यः, करोतीत्यत्र सूत्रस्य चारितार्थ्यसम्भवादिति वाच्यम्। द्वितीयप्रत्ययग्रहणाभावे अङ्गस्य, इत्यधिकारसूत्रमपि न कार्य्यम् तथा च अङ्गाधिकाराभावेनातः परस्य भिस ऐस् स्यादित्यादिक्रमेण तेषां सूत्राणामर्थ स्वीकारेणादोषात्। नचाङ्गाधिकाराभावे उक्तार्थे चर्म्मणामित्यादौ नामीत्यनेन दीर्घापत्तिः स्यात् एवं ब्राह्मणभिस्सेत्यत्रातोभिसैसिति ऐस् स्यादिति वाच्यम्। अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया, वा वारणसम्भवात्। नचाङ्गस्येति सूत्राभाव अतो दीर्घस्स्यात् यञि परे इत्यर्थे भनक्तीत्यादौ भकाराकारस्याऽतो दीर्घ इति दीर्घस्स्यादिति वाच्यम। छाजनोजति सूत्रे अकारोच्चारणसामर्थ्येन तत्र दीर्घवारणसंभवात् अतो दीर्घो यञीत्यत्र भूसुवोस्तिङीति सूत्रात् तिङीत्यनुवर्त्याने भुगिति सूत्रे भाष्ये भनक्तीत्यत्र दीर्घवारणात्?

नचैवम् अचिश्नुधात्विति सूत्रे इवर्णोवर्णान्तस्येयङ् स्यादचि परे इत्यर्थे श्र्यर्थमित्यादावियङ् स्यात्, एवमुरदित्यत्राङ्गाधिकाराभावे प्रत्यय इत्यर्थाभावेन वव्रश्चेत्यस्या सिद्धिरिति वाच्यम्। अङ्गस्य, इति सूत्रस्थाने " प्रत्यये " इत्यधिकारेण दोषवारणात् एवं न्यासे प्रत्ययग्रहणे यस्मात् स विहितस्तदादे स्तदन्तस्य ग्रहणमिति परिभाषया प्राकरोत् उपाहिष्टे त्यादावुपसर्गात् पूर्वमडाटौ न भविष्यतः। नचाङ्गस्येति सूत्राभावे अङ्गसंज्ञाविधायकसूत्रस्याप्रयोजनत्वेन कथं तस्य व्याख्यानं क्रियते इति वाच्यम्। ह्रस्वादङ्गात्, इणः

चीध्वमित्याद्यर्थमङ्गसंज्ञासूत्रस्यावश्यकत्वात्। अङ्गपदेन प्रकृते विव-क्षणाच्च।

नच द्वितीयप्रत्ययग्रहणाभावे प्रत्ययविशिष्टस्याङ्गसंज्ञायां सत्यामु-रदित्यत्राङ्गेन प्रत्ययपरत्वलाभानापत्तौ उरदत्वस्यापरनिमित्तत्वात् स्थानिवत्त्वाभावेन न सम्प्रसारणे इति सूत्रेण निषेधानापत्त्या अभ्या-सस्य पुनरपि सम्प्रसारणे जाते सम्प्रसारणाच्चेत्यनेन पूर्वरूपे वव्र-श्चेत्यस्यासिद्धिः, सति तु प्रत्ययग्रहणे अङ्गाक्षिप्ते प्रत्यये परे उर-दत्वस्य विधानेन परनिमित्तत्वात् उरदत्वस्याचः परस्मिन्निति स्थानिवद्भावेन न सम्प्रसारणे इति निषेधेन वव्रश्चेत्यस्य सिद्धि-रिति वाच्यम्। न सम्प्रसारणे सम्प्रसारणमित्यत्र सूत्रारम्भसाम-र्थ्यात् सम्प्रसारणपदं लक्षणया सम्प्रसारणाश्रयपूर्वरूपपरम् तदुक्तं न सम्प्रसारणे इत्यत्र भाष्ये " एतदेव ज्ञापयति परस्य न पूर्वस्येति, यद्वा सम्प्रसारणाश्रयस्य प्रतिषेध इति " सम्प्रसारणाश्रयस्य, सम्प्र-सारणनिमित्तकपूर्वरूपस्येत्यर्थः तथा च सकृत प्रवृत्त्यैवोभयो र्यणोः सम्प्रसारणे जाते पूर्वरूपस्य निषेधे यणि लक्ष्ये लक्षणस्ये तिन्यायेन पुनः सम्प्रसारणाप्राप्तौ वव्रश्चेत्यस्य सिद्धेः यद्वा सम्प्रसारणाश्रयस्य प्रतिषेध इति भाष्यस्यायमभिप्रायः. न सम्प्रसारणे सम्प्रसारणमिति सूत्रं परित्यज्य सम्प्रसारणाच्चेत्यत्रैव "सम्प्रसारणाद सम्प्रसारणे" इतिन्यासेन सम्प्रसारणात् सम्प्रसारणभिन्नेऽचि परे पूर्वरूपमेकादे-शस्स्यादित्यर्थे सम्प्रसारणे परे पूर्वरूपस्यैव प्रतिषेधेन यणि यूनः व-व्रश्चेत्यत्रोभयोर्यणोःसम्प्रसारणे जातेऽपि न दोष इत्याशयात्। किञ्च 'अभ्यासनिमित्तककार्य्याणां तन्निमित्तकत्वम्, इति स्वीका-रेण उरदत्वस्य परनिमित्तत्वेनाचःपरस्मिन्निति स्थानिवद्भावेन न सम्प्रारणे इति निषधेन वव्रश्चेत्यस्य सिद्धेः। अत्र प्रमाणन्तु ह्वः स-म्प्रसारणमिति सूत्रमेव. अन्यथा अजूहवदित्यत्राभ्यस्तस्य चेत्यनेनैव सम्प्रसारणासिद्धौ तद्वैयर्थ्यं स्पष्टमेव, मम तु अभ्यस्तस्य चेत्यत्रा-भ्यासनिमित्तककार्य्याणामित्यस्य सत्वेनाजूहवदित्यत्र णिचा व्यव-धानात् तदप्राप्त्या ह्वःसम्प्रसारणमित्यस्य सार्थक्यं स्पष्टमेव. अतः प्रजिह्वायकीयिषतीत्यत्राभ्यस्तस्य चेति सम्प्रसारणं न। नच तद-भावे प्रत्ययविशिष्टस्याङ्गसंज्ञायां राजपुरुष इत्यत्र पूर्वपदे सुबन्त-स्याङ्गत्वेन पदसंज्ञायां प्रत्ययलक्षणस्य न लुमते ति निषेधेन तत्र पद-त्वाभावेन नलोपानापत्तिः सति तु प्रत्ययग्रहणे प्रत्यये परे अङ्ग

संज्ञाविधानेन सुबन्तस्याङ्गत्वाभावेन न लुमतेति निषेधाभावेन प्रत्ययलक्षणेन पदत्वात् पूर्वपदे नलोपसिद्धिरिति वाच्यम्। न लुमता तस्मिन्निति न्यासे लुमता लुप्ते प्रत्यये परे यत् पूर्वस्य कार्य्यं तदेव निषिध्यते इति नात्र दोष इत्यभिप्रायात्। किञ्च न लुमताङ्गस्येत्यत्र मात्रशब्दस्य सन्निवेशेन न लुमते ति निषेधस्याङ्गमात्रस्य यत्र कार्य्यं तत्रैव प्रवृत्तिस्वीकारेण प्रत्ययग्रहणाभावे राजपुरुष इत्यत्र पूर्वपदे सुबन्तस्याङ्गत्वेऽपि पदत्वम् अङ्गमात्रस्य कार्य्यत्वाभावेन न लुमतेति निषेधाभावेन तत्र प्रत्ययलक्षणेन पदत्वान्नलोपसिद्धेः। नच तदभावे प्रत्ययविशिष्टादधिकस्याङ्गसंज्ञायां देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तशब्दात् सुप्प्रत्ययविधिः देवदत्तशब्दोत्तरं सुपं निमित्तीकृत्य तदादेः संघातस्य लुङ्पर्य्यन्तस्याङ्गत्वात् तस्य लुङ्परत्वेन देवदत्तशब्दात् पूर्वं अडागमः स्यात्, अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गत्वेत्यर्थस्य दुर्लभत्वादिति वाच्यम्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति परिभाषया यस्मात् लुङ् विहितः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादित्यदोषादिति चेन्न। द्वितीयप्रत्ययग्रहणाभावे पदादावङ्गसंज्ञा स्यात् तदुक्तंभाष्ये, पदादावङ्गसंज्ञाऽप्रसंगार्थं द्वितीयप्रत्ययग्रहणम्, अन्यथा स्त्र्यर्थमित्यादौ प्रत्ययविधानमात्रप्रतिबद्धाङ्गसंज्ञा स्त्रीशब्दस्य प्राप्नोति ततश्चतुर्थीविधानात् तथा च तन्नाङ्गाश्रयेयङुवङौ स्याताम् तस्मात् द्वितीयप्रत्ययग्रहणं कर्त्तव्यमेवेति समाधानात्।

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

नन्वत्र अधातुग्रहणं न कार्य्यम्। नचाधातुग्रहणाभावे आकडारस्थभिन्नसंज्ञानां समावेशदर्शनेन धातोः प्रातिपदिकसंज्ञापि स्यादिति वाच्यम्। अधातुग्रहणाभावेऽपि सुपो धातुप्रातिपदिकयोरिति सूत्रस्थधातुग्रहणेन धातोः प्रातिपदिकसंज्ञाऽभावज्ञापनात्। नचाप्सरायते श्येनायते इत्यादौ क्यङन्तस्य प्रत्ययान्तपर्य्युदासेनाप्रातिपदिकत्वात् तस्यावश्यकत्वेन ज्ञापकत्वासम्भवादिति वाच्यम्। सुप आत्मनः क्यजि त्यस्य स्थाने क्विष आत्मनः क्यजि तिन्यासेन प्रातिपदिकात् क्यच्विधानेन तस्यानावश्यकत्वेन सूत्रस्थधातुग्रहणस्य ज्ञापकत्वसम्भवात्। नच क्विष आत्मनः क्यजि तिन्यासे राजी-

यतीत्यादौ नलोपो न स्यादिति वाच्यम्। इदानीम् नः क्ये, इति-सूत्रस्य विध्यर्थत्वात्।

न चोक्तन्यासे राजकाम्यतीत्यादौ पदत्वाभावेन नलोपो न स्यादिति वाच्यम्। नः क्ये, इत्यस्य स्थाने न; की ति न्यासे राजीयतीत्यादावेव न स्यात्, प्रत्ययलक्षणेन कादिप्रत्ययत्वं तु वक्तुमशक्यम्, आद्यप्रत्ययग्रहणेनावयवलोपे प्रत्ययलक्षणमितिसूत्रस्याप्रवृत्ते रिति-वाच्यम्। नः कीतिन्यासं विहाय तस्य स्थाने नःय्कीति न्यासात् कादौ प्रत्यये परे नान्तस्य पदसंज्ञा स्यादित्यर्थात्। वृत्रहणावित्यादावप्युक्तरीत्या न दूषणमिति बोध्यम्।

नच फिष आत्मनः क्यजि तिन्यासे वाक्काम्यतीत्यादिलक्ष्याणां सिद्धि र्न स्यादिति वाच्यम्। धातोः कर्मणः समानकर्तृकादिच्छायां वेति सूत्रमारभ्य मुण्डमिश्रेति सूत्रपर्य्यन्तसूत्राणां स्वौजसिति सूत्र-स्थाग्रे पाठः कर्त्तव्यः अजाद्यतष्टाबित्यादौ प्रातिपदिकपदस्यानुवर्त्तनं तु फिष आत्मनः क्यजीतिसूत्रात् बोध्यम् तथाच काम्यच्प्रत्यये परे स्वादिष्वित्यनेन पदसंज्ञया न पूर्वोक्तदूषणम् क्यचि क्यङि यचि भमित्यनेन बाधात् तस्मादधातुग्रहणाभावे न धातोः प्रातिपदिकसंज्ञा-भवतीति समाधानात्।

न चानेकक्लिष्टकल्पनापेक्षया सुपो धातुप्रातिपदिकयोरिति सूत्रे धातुग्रहणमेव वरम् तथा च ज्ञापकाभावेनाधातुग्रहणाभावे धातोः प्रातिपदिकसंज्ञायां धातुभ्यः स्वाद्युत्पत्तिरपि स्यादिति वाच्यम्। अपवादत्वेन तिवादिभिर्बाधात्। नचाधातुग्रहणाभावे धातोः प्रातिपदिकसंज्ञायाम् अहन्नित्यत्र पूर्वभूतां प्रातिपदिकसंज्ञामादाय नलोपः प्रातिपदिकान्तस्येत्यनेन नलोपापत्तिस्स्यात् न च कार्य्यकालपक्षेऽत्र प्रातिपदिकसंज्ञायाः कर्त्तव्यत्वे प्रत्ययलक्षणेन प्रत्ययान्तपर्य्युदासात् प्रातिपदिकत्वाभावेन कथं नलोप इति वाच्यम्। न ङिसम्बुद्ध्योरिति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाऽप्रवृत्त्या दोषस्यासत्त्वात्, न लोप इतिसूत्रस्य प्रत्यासत्त्या प्रातिपदिकप्रकृतिक-सुबन्तोद्देश्यकं यत्पदं तदन्तस्य नलोप इत्यर्थात्, अत्र प्रातिपदिक प्रकृतिकसुबन्तोद्देश्यकपदत्वाभावात् नलोपानापत्तिस्तु न वाच्यम्, राजभ्यामित्यादावुक्तार्थे नलोपानापत्तेरिति वाच्यम्। अधातुग्रहणा-भावे नलोप इति सूत्रस्य स्थाने नलोपोऽतिङः, इतिन्यासेन तिङन्त-तदादिभिन्नस्य पदान्तस्य नकारस्य लोप इत्यर्थेनाहन्नित्यत्र नलोपस्य

वारणात् । न च न लोपोऽतिङः, इति न्यासे अतिङन्तं यत्पदं तदन्तस्य नस्य लोप इत्यर्थे रामानित्यादौ नलोपापत्तिरिति वाच्यम् । उच्चारणसामर्थ्यात्, अन्यथा शसो लोप इत्येव वदेत् । न च नलोपोऽतिङ, इति न्यासे सर्वस्मिन्नित्यादौ नलोपस्स्यात् उच्चारणसामर्थ्यात् नलोपाभावस्तु वक्तुमशक्यः सर्वस्मिन्नाश्रय इत्यत्र चारितार्थ्यात् तथाहि शयन्नासचालिष्वकालादित्यनेन विभक्त्यलुक्ति नलोपोऽतिङ इति नलोपे गुरोरनृत इत्येतद्दृष्ट्या नलोपस्यासिद्धत्वे नकारशकारयोः संयोगत्वेन तस्मिन्परे' संयोगे गुरु'रि' ति स्मिघटकेकारस्य गुरुत्वात् प्लुतः सिद्ध इति वाच्यम् । नलोपःसुप्स्वरेतिसूत्रे संज्ञापदेन त्रिसंज्ञाया एव ग्रहणेन प्लुतसंज्ञां प्रति नलोपस्यासिद्धत्वाभावेन दोषाभावात् । अत्र मानन्तु तत्सूत्रस्थभाष्यमेव । न च न लोपोऽतिङः इति न्यासे एधेरन्नपचेरेत्यादौ तिङन्ततदादिभिन्नत्वाभावान्नलोपो न स्यादिति वाच्यम् । अवयवस्य तिङन्तत्वेऽपि समुदायस्य तिङन्ततदादित्वाभावेनादोषात् । न चैवं न्यासे तत्र पूर्वान्तवद्भावेन तिङन्ततदादित्वान्नलोपो न स्यादिति वाच्यम् । कृत्तद्धितसमासाश्चेति समासग्रहणनियमपरकभाष्येण तस्यानभिधानात् । न चोक्तन्यासे अहन् यस्यां क्रियायां सा आहेत्यत्र पूर्वान्तवद्भावेन तिङन्ततदादित्वान्नलोपो न स्यादिति वाच्यम् । पूर्वोक्तभाष्यादस्याप्यनभिधानात् । न च तदभावे उक्तन्यासेन अहन्नित्यत्र नलोपाभावेऽपि प्रातिपदिकत्वात् एकवचनमुत्सर्गत इतिसिद्धान्तात् स्वाद्युत्पत्तिस्स्यादिति वाच्यम् । तस्य सति गमके प्रवृत्तेः । न चाधातुग्रहणाभावे धातोः प्रातिपदिकसंज्ञायां धातोरस्त्यन्तस्वार्थिकाकज् भविष्यतीति वाच्यम् । अकचि कृते भ्वादिगणपठितत्वाभावेन तिबाद्युत्पत्तिर्न स्यादिति स्वीकारादिति चेन्न । लाघवादधातुग्रहणमेव वरमितिस्वीकारात् ।

## प्रत्ययान्तमिति ।

आवर्त्तिते प्रत्ययपदे ( प्रत्ययग्रहण ) परिभाषया तदन्तविधिः अत्र संज्ञाविधाविति निषेधस्तु न । ज्ञापकसाजात्यात् संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यतासमर्थकं यत् प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पदं तत्रैव ( संज्ञाविधावि )ति परिभाषायाः प्रवृत्तिस्वीकारात् प्रकृते च प्रत्ययभिन्नस्य प्रातिपदिकसंज्ञाविधानेन प्रत्ययपदस्य

साक्षादुद्देश्यताप्रयोजकत्वाभावान्न दोष इतिभावः। कृदतिङि त्यादौ तिङ्भिन्नस्य तादृशोद्देश्यताप्रयोजकत्वाभावेनैतन्निषेधप्रवृत्त्यभावेन न क्षतिः अवयवोद्देश्यककार्य्यसमुदायो यत्र पर्य्युदस्यते तत्र समुदायस्यावयवे लक्षणैव, यथा नश्छव्यप्रशान्नि त्यत्र नकारोद्देश्यककार्य्यस्य पर्य्युदस्यमानस्य प्रशान् शब्दस्य लक्षणेति प्रशान्शब्दावयवभिन्नस्य नस्येत्यर्थः तथा प्रकृतेऽपि प्रत्यय इत्यनुवृत्त्या प्रत्ययोद्देश्यके कृत् संज्ञारूपकार्य्ये पर्य्युदस्यमानतिङन्ततदादिबोधकतिङ्पदस्य तिङन्ततदाद्यवयवे लक्षणया तत्रैव च नञर्थान्वयात्तिङन्ततदाद्यवयवभिन्नस्य धात्वधिकारविहितस्येत्यर्थेन तिङ्कृत्संज्ञावारणसम्भवात्, केचित्तु अप्रत्यय इत्यस्यैवावृत्ति र्नतु तद्घटकप्रत्ययस्य तथासति एकस्य प्रत्ययपदस्योपस्थिततदादिपदार्थेऽन्वयः अपरस्य नञर्थे भेदेऽन्वय इत्यसामर्थ्यात्समासो न स्यात् अप्रत्यय इत्यस्यावृत्तौतु एकत्र प्रत्ययपदस्य प्रत्ययान्ततदाद्यर्थस्तस्य भेदेऽन्वयः अपरत्र प्रत्ययपदस्य प्रत्यय इत्यर्थः तस्यापि भेदेऽन्वयः इतिसामर्थ्यसत्त्वात् समाससिद्धिरिति वदन्ति वस्तुतस्तु प्रत्यय इत्यस्यैवावृत्तिः प्रत्ययान्ततदादौ लक्षणेत्युभयोरपि प्रत्ययपदार्थयोरेकत्र द्वयमितिरीत्या भेदे एवान्वय इति नासामर्थ्यम्। नन्वत्रावृत्ति र्न मन्तव्या रोणिरित्यस्य रोणिशब्दान्तात्प्रातिपदिकाद् दणित्यर्थे ( व्यपदेशिवद्भावोऽप्रातिपदिकेने ) तिनिषेधात् केवलरोणिशब्दादणप्रत्ययो न स्यादित्येतदर्थं येन विधिरिति सूत्रे स्वस्य चेति पाठ्यमिति वार्त्तिकं कृतं भाष्ये एवं चात्रापि प्रत्ययग्रहणपरिभाषोपस्थिततदादिपदं विशेष्यीकृत्य प्रत्ययप्रत्ययान्ततदन्तस्य स्वस्य रूपस्य संज्ञं स्यादिति प्रत्ययतदादिभिन्नप्रत्ययान्ततदादिभिन्नप्रत्ययभिन्नं चेत्याद्यर्थसिद्धेः। न च स्वस्य चेत्यनेनापि विशेष्यतदादेस्त्यागः कर्त्तुं न शक्यते इति प्रत्ययतदादिभिन्नप्रत्ययान्ततदादिभिन्नं चेत्याद्यर्थ एव स्यात् ततश्च हरिष्वत्यादौ स्तोःप्रत्ययतदादिभिन्नत्वेन प्रातिपदिकसंज्ञा स्यात् न हि व्यपदेशिवद्भावेन केवलप्रत्यये प्रत्ययतदादित्वमानेतुं शक्यते इति वाच्यम्। स्वस्य चेत्यनेनात्र तदन्तविध्यभावपक्षे विशेष्यतदादीत्यस्य त्यागोपि स्वीक्रियते इत्यदोषात् नागेशमते व्यपदेशिवद्भावेन तदादित्वमप्यायास्यत्येवेत्यदोषाच्चेति चेन्न। स्वस्य चेति वार्त्तिकस्य व्यपदेशिवद्भावनिषेधकस्य व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषाबाधकत्वेनात्र तया व्यपदेशिवद्भावनिषेधः प्राप्नोति तत्रैव तद्वार्त्तिकं प्रवर्त्तते इत्यावृत्ति-

मन्तरा प्रत्ययंभिन्नमित्यर्थस्यालाभात् उत्तरसूत्रे तद्धितग्रहणेन हि प्रत्ययान्ततदादिभिन्नमित्येक एवार्थो लभ्यते ननु प्रत्ययान्ततदादिभिन्नमित्येक एवार्थोऽस्तु स्वस्य चेति वार्त्तिकञ्च यथा व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्य बाधकन्तथा विनिगमनाविरहात् असहाये व्यपदेशिवद्भावनिषेधकस्य एकस्मिन्नित्यस्यापि बाधकमिति हरिष्वित्यादौ सोरपि व्यपदेशिवद्भावेन प्रत्ययान्ततदादित्वेन तस्य प्रातिपदिकसंज्ञापत्ति, र्वक्तुमशक्येति चेन्न। स्वस्य चेति वार्त्तिकस्यैकस्मिन्नि त्यस्यापि बाधकत्वे सुप्तिङन्तमिति सूत्रस्थभाष्याऽसंगतेः, तत्र भाष्ये उपस्थिततदादिपदं विशेष्यीकृत्य तदन्तविधौ सुबन्ततिङन्तमित्यर्थसिद्धौ अन्तग्रहणं व्यर्थं सत्संज्ञाविधाविति परिभाषायां ज्ञापकमित्युक्तम् तत्र चान्तग्रहणसत्त्वे येन विधिस्तदन्तस्येत्यस्यैवाप्रवृत्त्या एकस्मिन्नित्येतन्निषेधकस्वस्य चेतिवार्त्तिकन्न प्रवर्त्तते इति हरिष्वित्यादौ केवलसोःपदसंज्ञा न, असहाये व्यपदेशिवद्भावाप्रवृत्त्या तस्य सुबन्तत्वाभावात्; अन्तग्रहणाभावे तु येनविधिस्तदन्तस्येति तदन्तविधौ एकस्मिन्नित्येतन्निषेधकं स्वस्यचेति वार्त्तिकमपि प्रवर्त्तते ततश्च हरिष्वित्यादौ व्यपदेशिवद्भावेन सोरपि सुबन्तत्वेन पदसंज्ञा स्यात् इति फलभेदाद् भाष्यासंगतिः स्पष्टैव। नचान्तग्रहणस्य ज्ञापकतापरभाष्यप्रमाण्येन सुप्तिङन्तमिति सूत्रे एकस्मिन्नित्येतन्निषेधक स्वस्य चेतिवार्त्तिकन्न प्रवर्त्तते इति कल्प्यते आवृत्तिस्वीकारापेक्षयैतत्कल्पने एव लाघवादित्येवं रीत्या तद्भाष्यासंगतिवारणेपि टिड्ढाणञिति सूत्रस्थभाष्यासंगति र्दुर्वारैव स्यात् तत्र हि भाष्ये अनुपसर्जनाधिकारेण तदन्तविधिद्वयज्ञापनस्य फलं कौम्भकारेयसिद्धिः अन्यथा कुम्भकारेयोप्यापद्येतेत्युक्तम् तत्र तु तदन्तविधिद्वयेनाणन्ततदाद्यन्तात्प्रातिपदिकान्ङीबित्यर्थोपि कुम्भकारेण इत्यस्यैवापत्तिर्दुर्वारैव स्यात् स्वस्य चेत्यनेन असहाये व्यपदेशिवद्भावनिषेधकैकस्मिन्नित्यस्याप्रवृत्तौ व्यपदेशिवद्भावेन कारेत्यस्यापि अणन्ततदाद्यन्तत्वेन तस्मादेव ङीपि कारीत्यस्यैव स्त्रीप्रत्ययान्ततदादित्वेन तस्मादेव स्त्रीभ्यो ढगिति ढक् प्रवृत्तेरिति भाष्यासङ्गतिः स्पष्टैव एतद्भाष्यप्रामाण्येन टिड्ढाणञिति सूत्रेपि स्वस्य चेति वार्त्तिकाप्रवृत्तिकल्पनेन तद्भाष्याप्रवृत्तिर्निवार्या आवृत्तिखण्डनं न युक्तम् स्वस्य चेतिवार्त्तिकस्याप्रवृत्तिः सुप्तिङन्तंपदम्, टिड्ढाणञितिसूत्रद्वये तद्वार्त्तिकाप्रवृत्तिरित्येतत्कल्पनापेक्षया आवृत्तिस्वीकार एव लघवादिति दिक्। अत्रार्थवत्प्रा-

तिपदिकमित्येव सूत्रं कार्य्यम् धातोः प्रातिपदिकसंज्ञापत्तिस्तु न सुपो धातुप्रातिपदिकयोरितिसूत्रे सुपःप्रातिपदिकस्येत्येव वक्तव्ये धातुग्रहणेन धातोःप्रातिपदिक संज्ञानेतिकल्पनात् नापि प्रत्ययान्तस्यापि तदापत्तिः कृत्तद्धितेति तद्धितग्रहणेन, प्रत्ययान्तस्य प्रातिपदिकसंज्ञा चेत्तर्हि तद्धितान्तस्यैवेतिनियमात् नापि केवलप्रत्ययस्य स्यात्पदाद्व्योरितिसूत्रस्थस्याद्ग्रहणेन प्रत्ययस्य संज्ञा नेति ज्ञापनादिति वदन्ति वस्तुतस्तु सामर्थ्यकल्पनापेक्षया यथास्थितसूत्रकरणमेव रमणीयमिति बोध्यम्। अत्र प्राञ्चः अत्रसूत्रे वृत्तिमत्त्वमर्थवत्त्वम्, उत्तरसूत्रे च एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वम्, अर्थवदिति शब्दाधिकारमाश्रित्यार्थवदिति वर्तते तदनुवृत्तिसामर्थ्याद्तदन्तविधिः 'न केवलाःकृतस्तद्धिता वा अर्थवन्त' इति भाष्यात् यदि चात्रापि वृत्तिमत्त्वमर्थवत्त्वं स्यात्तर्ह्यणादीनामपि वृत्तिमत्त्वरूपार्थवत्त्वसत्त्वे भाष्योक्तिरसङ्गता स्यात्। एकार्थीभावश्च यस्य प्रातिपदिकसंज्ञां चिकीर्षिता तन्मात्रवृत्तिरेव ग्राह्यः तेन पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्य तद्धितान्तत्वान्न प्रातिपदिकत्वम् प्रियशब्दान्त एव तत्र एकार्थी भावो न तन्मात्रवृत्तिरित्यदोषः एवञ्च प्रत्ययस्यापि वृत्तिमत्त्वरूपार्थवत्त्वसत्त्वेन प्रातिपदिकसंज्ञावारणायाऽप्रत्यय इति पर्य्युदासोऽप्यावश्यक इति वदन्ति, नव्यास्तु अर्थवत्त्वद्वयस्वीकरणमर्थाधिकारं परित्यज्य शब्दाधिकाराश्रयणं, पञ्चगवधनमित्यादौ प्रातिपदिकसंज्ञावारणाय मात्रपदसन्निवेशः प्रत्ययस्य प्रातिपदिकत्ववारणायाऽप्रत्ययपर्य्युदासश्च किञ्च शब्दानुवृत्तौ तदनुवृत्तिप्रअर्थवदित्यस्यास्वारस्यापत्तिः किञ्च भाष्ये तद्धितग्रहणस्य नियमार्थत्वेन प्रत्ययान्तपर्य्युदासस्य प्रत्याख्याने पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्य प्राचीनमते सामान्यतोऽर्थवत्त्वग्रहणे अर्थवत् सूत्रेण प्रातिपदिकत्वे ङीबाद्यापत्तिः स्यादित्युभयसूत्रे एकार्थवत्त्वम् * एतत् संज्ञाफलभूतेति परिष्कुर्वन्ति एतत्पदेन यस्यार्थवत्त्वम् चिकीर्षितं तद्ग्राह्यम् तत्र च बोधजनकता सुप्प्रकृतिमात्रे वैयाकरणनिकाये आरोपितैव न वास्तविकी तावन्मात्रे बोधजनकतायाः शक्तेरस्वीकारात् वास्तविकी बोधजनकता राम इत्यादिसुबन्तपद एवास्ति।

* एतत्संज्ञाफलभूताविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वमर्थवत्त्वमिति भावः।

सुपप्रकृतिमात्रे आरोपितापि बोधजनकता यद्यपि प्रातिपदिकसमःकाले नास्ति तथापि साम्भावनिकीमपि बोधजनकतामादाय लक्षणसमयन्वयो बोध्यः, एवञ्च राम इत्यादौ रामेत्यस्य या संज्ञा तत्फलभूता विभक्ति रागासिनी स्वादिविभक्ति एतदितरो घटादि स्तत्समभिव्याहारानपेक्षयैव परिनिष्ठितस्य राम इत्यस्य लोकार्थविषयकबोधजनकत्वमस्ति नहि राम इत्यनेनार्थविषयकबोधे जननीये घटपदादिसमभिव्याहारस्य कारणत्वं केनचिदभ्युपगतम् राम इत्यादौ स्वादिप्रत्ययानां नार्थवत्त्वम् स्वादिप्रत्ययानां या प्रातिपदिकसंज्ञा तत्फलभूतविभक्तीतरराम इत्यादिप्रकृतिसमभिव्याहारापेक्षयैव तेषामर्थबोधजनकत्वात् प्रत्ययेनार्थबोधे जननीये समभिव्याहारस्य कारणत्वस्य क्लृप्ततया नार्थवत्त्वलक्षणसमन्वयः रामेति समुदायस्य प्रातिपदिकसंज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षयैव लोके अर्थविषयकबोधजनकत्वेन प्राप्तस्य प्रातिपदिकत्वस्य वारणाय प्रत्ययान्तपर्य्युदासःसार्थकः तथाच प्रत्ययपर्य्युदासो विफल एवेति तदाशयः।

विभक्तावेतत्संज्ञाफलभूतेतिविशेषणमवश्यमेव देयम् अत एव राज्ञःपुरुष इत्यादौ सुप्प्राग्वर्त्तिनो राज्ञःपुरुषेतिसमुदायस्य नार्थवत्त्वम् राज्ञःपुरुषेत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूतविभक्तीतरा या पुरुषमात्रप्रकृतिका सुविभक्तिस्तत्समभिव्याहारापेक्षयैव राज्ञःपुरुषे त्यस्यार्थबोधजनकत्वात् अन्यथा राज्ञः पुरुषेत्यस्य पुरुषप्रकृतिकसुविभक्तिसमभिव्याहारापेक्षयार्थविषयकबोधजनकत्वेपि तादृशसुविभक्तीतरघटादिसमभिव्याहारानपेक्षयैवार्थबोधजनकत्वात् तत्त्वं दुर्वारमेव स्यात् अर्थवत्त्वं च तस्य प्रातिपदिकसंज्ञायां सुपो लुक् स्यात् एतत्संज्ञाफलभूतविभक्तिसमभिव्याहारापेक्षया लोकेऽर्थबोधजनकत्व मित्येतावदुक्तौ तु दधि, मध्वित्यादौ विभक्त्यनपेक्षयैवार्थबोधजनकत्वाद व्याप्तिस्स्यादतो नोक्तम्, लक्षणे समभिव्याहारस्यानुपादाने तु राम इत्यादावप्यर्थवत्त्वं न स्यात् 'सर्वं हि वाक्यं क्रियायां परिसमाप्यते इति' नियमात् अस्ति भवतीत्यादेर्विनार्थबोधासम्भवेनैतत्संज्ञाफलभूतविभक्तीतरोऽस्तीत्यादिस्तदपेक्षयैवार्थबोधजनकत्वात् समभिव्याहारोपादाने तु समभिव्याहारशब्दस्य नियमपौर्वापर्य्यबोधकतयाऽस्तीत्यादिप्रयोगस्य नैयत्याभावेन कदाचिद्रस्ति रामः कदाचिद्रामोऽस्ति इत्यादिवाक्यस्य सत्त्वात् न दोषः,

अथैवमत्र परिष्कारे एतत्संज्ञेत्यत्र यद्वेषा चासौ संज्ञा एतत्संज्ञेति कर्म्मधारयस्तर्हि एतत्प्रातिपदिकसंज्ञाफलभूतेत्याद्यर्थः स्यात्ततश्च अधातुः किम् अपि काकश्श्येनायते इति भाष्यम्विरुद्ध्येत धातोश्श्येनायेत्यस्य प्रातिपदिकसंज्ञाफलभूतविभक्तीतरः ते इति तत्समभिव्याहारापेक्षयैवार्थबोधजनकत्वादर्थवत्त्वाभावेन प्रातिपदिकसंज्ञा न स्यात् इतितद्भाष्यविरोधस्य दुर्वारत्वात् इदञ्च भाष्यं प्रत्ययान्तपर्य्युदासमबुद्ध्वा प्रवृत्तम्, यदि चैतस्य संज्ञैतत्संज्ञेति षष्ठीतत्पुरुष स्तदा एतद्वृत्तित्वविशिष्टा या संज्ञा तत्प्रयोज्यविभक्तीत्याद्यर्थः स्यात् यस्यार्थवत्त्वं चिकीर्षितं तदेतत् ततश्च श्येनायते इत्यत्र श्येनायेत्येतद्वृत्तित्वविशिष्टा या धातुसंज्ञा तत्प्रयोज्यविभक्ति स्ते इति तदितरघटपटादिसमभिव्याहारानपेक्षयाऽर्थबोधजनकत्वस्य श्येनायेत्यत्र सत्त्वादर्थवत्त्वन्दुर्वारमिति अधातुःकिम् अपिकाकः श्येनायते इतिभाष्यस्य सूपपन्नत्वेपि प्रत्ययग्रहणपरिभाषायाः प्रत्ययविषये प्रवृत्तौ फलम् देवदत्तो गार्ग्येत्यत्र देवदत्तो गार्ग्येत्यस्य तद्धितान्तत्वात्प्रातिपदिकत्वं न, कृत्तद्धितेति सूत्रे (प्रत्ययग्रहण) परिभाषायांस्तदादिपदोपस्थितौ देवदत्तो गार्ग्येत्यस्य तद्धितान्ततदादित्वाभावेन तदप्रवृत्ताविति भाष्यं विरुध्येत देवदत्तो गार्ग्येत्येतद्वृत्तित्वविशिष्टा या प्रातिपदिकसंज्ञा तत्प्रयोज्यविभक्ति रागामिनी तदितरगार्ग्य शब्दप्रकृतिकसुसमभिव्याहारापेक्षयैव देवदत्तो गार्ग्येत्यस्यार्थबोधजनकत्वेनार्थवत्त्वाभावात्प्रातिपदिकसंज्ञाऽप्रवृत्तेः देवदत्तोगार्ग्येत्येतद्वृत्तित्वविशिष्टा प्रातिपदिकसंज्ञा केवलगार्ग्यशब्दे नास्ति देवदत्तवृत्तित्वविशिष्टब्राह्मणत्वस्य यज्ञदत्तादौ केनाप्यस्वीकर्त्तव्यत्वात् एतद्वृत्तित्वविशिष्टा या संज्ञा तत्प्रयोज्यत्वं विभक्तौ न दीयते संकेतसम्बन्धेन प्रातिपदिकपदवत्त्वरूपा प्रातिपदिकसंज्ञा तु सर्वत्रैकैव एवञ्च देवदत्तो गार्ग्य इत्यत्र देवदत्तो गार्ग्येत्येतद्वृत्तिप्रातिपदिकसंज्ञायाः केवलगार्ग्यवृत्तिप्रातिपदिकसंज्ञायाश्चैक्येनैतत्संज्ञाफलभूतविभक्तिः गार्ग्यशब्दप्रकृतिकसुविभक्तिस्तदितरघटपटादिसमभिव्याहारानपेक्षयैव देवदत्तो गार्ग्येत्यस्यार्थबोधजनकत्वादर्थवत्त्वं सुलभमिति प्रत्ययग्रहणपरिभाषया देवदत्तो गार्ग्य इत्यत्र फलदानपरं भाष्यं सूपपन्नमिति वक्तुम शक्यम् राज्ञःपुरुष इत्यादौ सुरहितस्य राज्ञःपुरुष इतिसमुदायस्य प्रातिपदिकत्वापत्तेः पूर्वोक्तरीत्यैतद् संज्ञाफलभूतविभक्तिःपुरुषशब्दाज्जायमाना सुविभक्तिस्तदितरघटादिसमभिव्याहारानपेक्षयैव

राज्ञःपुरुष इति समुदायस्यार्थबोधजनकत्वेनार्थवत्त्वस्य सत्त्वात् एव- श्चैतत्संज्ञेत्यत्र कः समासः कश्च तदर्थं इति चेत् शृणु एतस्य संज्ञैत- तत्संज्ञेति षष्ठीतत्पुरुषः समासः, एतद्वृत्तित्वविशिष्टसंज्ञाप्रयो- ज्यविभक्तीत्याद्यर्थः श्येनायते इत्यत्र श्येनायेत्यस्यार्थवत्त्वसत्त्वाद्धातुः किम् अपि काकश्श्येनायते इति भाष्यं सूपपन्नम्, राज्ञःपुरुष इत्यादौ राज्ञः पुरुष इत्येतद्वृत्तित्वविशिष्टप्रातिपदिकसंज्ञाप्रयोज्यविभक्ती- तरपुरुषप्रकृतिकसुविभक्तिसमभिव्याहारापेक्षयैव राज्ञः पुरुषेत्यस्या- र्थबोधजनकत्वात् अर्थवत्त्वाभावेन राज्ञःपुरुषेति समुदायस्य प्राति- पदिकसंज्ञा कृत्तद्धितेति सूत्रे तद्धितांशेऽर्थवद्यत् कृत्तद्धितान्तं तत्प्रातिपदिकसंज्ञं भवतीत्यर्थः कार्य्यः एवं च प्रत्ययविशेषग्रहणे प्रत्ययग्रहणपरिभाषयाऽप्रवृत्तौ देवदत्तो गार्ग्य इत्यत्र केवलगार्ग्य- शब्दस्यैतत्संज्ञेत्यर्थवत्त्वलत्त्वेनार्थवद्यत्तद्धितान्तं सुरहितन्देवदत्तो गार्ग्येति तस्य प्रातिपदिकसंज्ञा दुर्वारैव स्यादिति प्रत्ययग्रहणप- रिभाषया देवदत्तो गार्ग्येत्यत्र फलदानपरं भाष्यमपि सूपपन्नमेव।

अत्र च लक्षणे विभक्तिपदं प्रत्ययमात्रोपलक्षणम् अत एव रमा- गौरी त्यादौ टाबादेरेतत्संज्ञाफलभूतविभक्तीतरत्वाभावेन रमगौरे- त्यादौ नार्थवत्त्वसिद्धिः, अन्यथा रम - गौरेत्यादिवृत्तिप्रातिपदिक- संज्ञाफलभूतविभक्तीतरष्टाबादिस्तत्समभिव्याहारापेक्षयैव रमगौरे- त्यादीनामर्थबोधजनकत्वादर्थवत्त्वं स्यात् ततश्च प्रातिपदिकत्वा- भावाट्टाबादयो न स्युः, इन्द्राणीशब्देनार्थबोधे जननीये आनुक्समभि- व्याहारस्य तु न कारणत्वम् एतेन विभक्तिपदस्य प्रत्ययमात्रोप- लक्षणत्वेपीन्द्राणीत्यादावेतत्संज्ञाफलभूतप्रत्ययेतर आनुक् तत्सम- भिव्याहारापेक्षयैवार्थबोधजनकत्वादिन्द्राणीशब्दस्यार्थवत्त्वं न स्यात् ततश्चेन्द्रादेः प्रातिपदिकत्वाभावेनेन्द्रवरुणेत्यानुकूङीषौ न स्याता- मिति वदन्तः पराकृताः आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थ- वत्त्वमिति सिद्धान्तादागमविशिष्टस्येन्द्राणीत्यादेरेवार्थवत्त्वमत्वागम- रहितेन्द्रादेरिति कथं तस्य प्रातिपदिकत्वम् किञ्च तस्मादानुगा- गमङीषा विति तु नाशंकनीयम् आनुगागमे कृते आनुकसमभि- व्याहारे चागमविशिष्टस्यैवार्थवत्त्वमित्यनेनागमविशिष्टस्यैवार्थवत्त्वेपि आनुगागमात्पूर्वमिन्द्रादेरेवार्थबोधे जननीये आनुक्समभिव्याहारस्य कारणत्वमित्याग्रहश्चेदर्थवत्त्वलक्षणे प्रत्ययग्रहणमपि न कार्य्यम्, एतत्संज्ञाफलभूतेतरेत्येव निवेशनीयम् आनुकश्चेन्द्रादिशब्दवृत्तिप्रा-

तिपदिकसंज्ञाफलभूतत्वेन तदितरत्वाभावान्न दोषः एवं चैतत् संज्ञाफलभूतेतरसमभिव्याहारेत्यादि बोध्यम् । नन्वेधांचक्रे इत्यादावेधामित्यस्यार्थवत्त्वं न स्यात् तस्यैतत्संज्ञाफलभूतेतरचक्रे इत्येतदपेक्षयैवार्थबोधजनकत्वात् ततश्चैधामित्यस्य प्रातिपदिकत्वाभावेन सुबनुत्पत्त्या पदत्वाभावादेधामित्यतः परस्य चक्रे इत्यस्य पदत्वेऽपि तिङ्ङतिङ इति निघातस्वरो न स्यात् किंचैधामित्यस्य पदत्वाभावान्मोऽनुस्वार इत्यनुस्वारो न स्यात् वा पदान्तस्येति वैकल्पिकपरसवर्णश्च न स्यात् । एतत्संज्ञाफलभूतेतरो यः पदेतरस्तत्समभिव्याहारेत्यादिस्वीकारे तु प्रकृते एधांचक्रे इत्यादौ चक्र इत्यस्य तिङन्तत्वेन पदत्वादित्येधामित्यस्यार्थवत्त्वसौलभ्येऽपि हरिष्वित्यादौ सोरप्यर्थवत्त्वं स्यात् सुप्प्रत्यये परे हरिशब्दस्य स्वादिष्विति पदत्वेनैतत्संज्ञाफलभूतेतरो यः पदेतरस्स च हरिशब्दादन्यो घटादिस्तत्समभिव्याहारानपेक्षयैव सोरर्थबोधजनकत्वादर्थवत्त्वे च सोः प्रातिपदिकसंज्ञा स्यात्ततश्च सुपः स्युः किञ्च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किञ्चित् फलं प्रत्ययेष्वतिव्याप्तिवारणादतिरिक्त मिति नागेशेनोक्तं व्याहन्येत् एतत्संज्ञेत्याद्यर्थवत्त्वस्वीकारेऽपि प्रत्ययेष्वतिव्याप्तेर्दुर्वारत्वात् तेनैतत्संज्ञाफलभूतेतरो यः सुप्तिङन्तमितिपदेतर इत्युक्तौ तु हरिष्वित्यादौ हरिशब्दस्य सुप्तिङन्तमिति पदेतरत्वेन सोरर्थवत्त्वाभावेऽपि परमश्चासौ हरिश्चेति परमहरिस्तेषु परमहरिष्वित्यादौ अन्तर्वर्त्तिविभक्त्याश्रयणाद्धरिशब्दस्य सुप्तिङन्तमिति पदत्वेनैतत्संज्ञाफलभूतेतरः सुप्तिङन्तमितिपदेतरो हरिशब्दादन्यस्तत्समभिव्याहारानपेक्षयैव सोरर्थबोधजनकत्वेन तस्यार्थवत्त्वं दुर्वारं स्यात् यदि च परमहरिष्वित्यादौ सुनार्थबोधे जननीये परमहरिशब्दसमभिव्याहारस्य कारणत्वं परमहरिशब्दस्य प्रत्ययलक्षणेनापि सुप्तिङन्तमिति पदत्वं नास्ति तस्य सुबन्ततदादित्वाभावात् इत्येतत्संज्ञाफलभूतेतरस्सुप्तिङन्तमितिपदेतरः परमहरिशब्दस्तत्समभिव्याहारापेक्षयैवार्थबोधजनकत्वेन सोरर्थवत्त्वन्न सम्भवतीत्युच्यते तर्हि अत्रेरपत्य आत्रेयः मधोरपत्यो माधवस्तेष्वत्रिषु मधुष्वित्यादौ सोरर्थवत्त्वमापद्येत अन्तर्वर्त्तिविभक्त्या त्रिशब्दस्य मधुशब्दस्य च सुप्तिङन्तमिति पदत्वेनैतत्संज्ञाफलभूतेतरो यः सुप्तिङन्तमितिपदेतरः अत्रिमधुशब्दादन्यः तत्समभिव्याहारानपेक्षयैव सोरर्थवत्त्वादिति चेन्न एतत्संज्ञाफलभूतेतरो यः स्वादिष्वितिपदत्वा-

नाश्रयेतरश्चक्रे इत्यतोन्यो घटादि स्तत्समभिव्याहारानपेक्षयैवैधामित्यस्यार्थबोधजनकत्वेन तस्यार्थवत्त्वमिति यत्त्वेधांचक्रे इत्यादौ एधामित्यस्यार्थवत्त्वसिद्धये एतत्संज्ञाफलभूतेतरो यः तिङन्तेतर इति निवेशनीयम् चक्रे इत्यस्य तिङन्तेतरत्वाभावेन एधामित्यस्यार्थवत्त्वसिद्धिः स्पष्टैव यत्तु अग्निषु मधुष्वित्यादौ अग्निमधुशब्दयोस्तिङन्तेतरत्वेन सोऽर्थवत्त्वमित्युक्तन्तन्न अ अ भवावेष्विति विग्रहे (आख्यातमाख्यातेने)ति समासे आभवावेष्वित्यादौ सोऽर्थवत्त्वापत्तिः परादिवद्भावेन आभवावेतिसमुदास्य तिङन्तत्वात् एतत्संज्ञाफलभूतेतरस्तिङन्तेतर आभवाव इत्यस्मादन्य स्तत्समभिव्याहारानपेक्षयैव सोऽर्थबोधजनकत्वात् अर्थवत्त्वम् निभशब्देनार्थबोधकारणीभूतस्य पूर्व्वपदस्य तिङन्तत्वेन निभशब्दस्यार्थवत्त्वं न स्यात् एतत्संज्ञाफलभूतेतर स्तिङन्तेतरः पूर्वपदं तत्समभिव्याहारापेक्षयैव निभशब्दस्यार्थबोधजनकत्वात् न हि यत्किंचित्पूर्व्वसमभिव्याहारमन्तरा निभशब्दः किमप्यर्थं बोधयितुं शक्नोति, स्वभावात् यत्किंचित्पूर्व्वसमभिव्याहारसत्त्वे एव तस्यार्थबोधजनकत्वात् ततश्च प्रातिपदिकत्वाभावात् सुबनुत्पत्त्या तन्निभमित्यादौ समासो न स्यात् अथैतत्संज्ञाफलभूतेतर स्वादिष्विति पदत्वानाश्रयपदेतर समभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वरूपार्थवत्त्वोपगमेपि पुंश्चगवधनमित्यादौ धनपदस्यैतत्संज्ञाफलभूतेरत्वेपि स्वादिष्विति पदत्वानाश्रयपदेतरत्वाभावेनैतत्संज्ञाफलभूतेतर स्वादिष्विति पदत्वानाश्रयपदेतरो धनशब्दादन्य स्तत्समभिव्याहारानपेक्षयैवार्थबोधजनकत्वात्पञ्चगवेत्यस्य प्रातिदिकत्वं स्यात् इति चेन्न स्वादिष्विति पदत्वानाश्रयपदेतरेतित्यक्त्वा स्ववृत्तिसंज्ञानाश्रयपदेतरेति निवेश्यते स्ववृत्तिसंज्ञा च पर्य्याप्त्यापि गृह्यते ततश्च प्रकृते पञ्चगवेत्येतद्वृत्तिर्या संज्ञा तदनाश्रयपदं धनशब्दादन्यत् तदितरं धनपदं तत्समभिव्याहारापेक्षयैव पञ्चगवेत्यस्यार्थबोधजनकत्वेनार्थवत्त्वाभावात् तत्र स्ववृत्तिसंज्ञा च पर्य्याप्त्या गृह्यते स्ववृत्ति संज्ञानाश्रयपदेतरेतिनिवेशे तन्निभमित्यादौ स्ववृत्तिमुपसंजनिष्यमाणां समाससंज्ञां गृहीत्वा निभशब्दस्यार्थवत्त्वं न स्यादित्यपास्तम् कस्या अपि जातायाः स्ववृत्तिसंज्ञाया अभावात्, अत्रपदनिवेशस्य फलं राज्ञः पुरुष इत्यादौ राज्ञः पुरुषेत्यस्यार्थवत्त्वाभावान्ने विभक्तिः राज्ञःपुरुषेत्येतद्वृत्तिसंज्ञया अभावेऽपि स्ववृत्तिसंज्ञानाश्रयपदत्वं नास्तीति तादृशपदेतरत्वसत्त्वेन तत्समभिव्याहारेणैव

राज्ञः पुरुषेत्यस्यार्थबोधजनकत्वादर्थवत्त्वं दुर्वारमेव स्यात् कुम्भकार इत्यत्र कारेत्यस्यैतत्संज्ञाफलभूतेतरस्ववृत्तिसंज्ञानाश्रयपदेतरो कः कुम्भ इति तत्समभिव्याहारापेक्षयैवार्थबोधजनकत्वमिति कार इत्यस्यार्थवत्त्वं न स्यात् ततश्च तस्य न प्रातिपदिकसंज्ञाप्राप्तिः अन्यथा कुम्भकारेऽप्यापद्येतेति नागेशग्रन्थासङ्गतिस्स्यात् तदर्थं पूर्वपदेतरेत्यपि निवेशनीयम् यत्त्वेतत्संज्ञाफलभूतेतरो यः स्ववृत्तिसंज्ञानाश्रयस्वोत्तरेतरेतरस्तत्समभिव्याहारेत्याद्यर्थवत्त्वं कुम्भकार इत्यत्र स्वीकार इति तद्वृत्तिसंज्ञानाश्रयस्वोत्तरेतरः कुम्भशब्द स्तदितरो घटादि स्तत्समभिव्याहारानपेक्षयैव कारेत्यस्यार्थबोधजनकत्वादर्थवत्त्वं सिद्ध मित्युक्त न्तत्तुच्छम् हरिष्वित्यादौ सोरर्थवत्त्वापत्तेः स्ववृत्तिसंज्ञानाश्रयस्वोत्तरेतरो हरिस्तदितर उदासीन स्तत्समभिव्याहारानपेक्षयैव सोरर्थबोधजनकत्वात् एवं चैतत्संज्ञाफलभूतेतरस्ववृत्तिसंज्ञानाश्रयपदेतरपूर्वपदेतरसमभिव्याहारानपेक्षयार्थबोधजनकत्वमर्थवत्त्वम् नच पक्त्रिममित्यादौ पक्त्रीत्यस्य या संज्ञा तत्फलभूतेतरः स्ववृत्तिसंज्ञानाश्रयपदेतरपूर्वपदेतरः सुविभक्तिस्तत्समभिव्याहारापेक्षयैव पक्त्रेरर्थबोधजनकत्वादर्थवत्त्वं न स्या त्ततश्च प्रातिपदिकत्वाभावात् क्त्रेर्मप्नित्यमिति मप्प्रत्ययो न स्यादिति वाच्यम् सुविभक्तेरपि परम्परया पक्त्रीत्येतद्वृत्तिप्रातिपदिकसंज्ञाप्रयोज्यत्वेनैतत्संज्ञाफलभूतेतरत्वाभावात् पक्त्रीत्यनेनार्थबोधे जननीये मप्प्रत्ययसमभिव्याहारस्यैव कारणत्व न्नतु सुविभक्तिसमभिव्याहारस्येत्यदोषात् नन्वेवमपि एधामासतुः कल्पमित्यादौ आसतुःकल्पमित्यस्यार्थवत्त्वं न स्यात् पाणिनिसंकेतसम्बन्धेन पदत्वस्वरूपपदत्वं सर्वत्रैकमेव स्वम् आसतुरिति तद्वृत्तिः पर्याप्त्या पदसंज्ञा तदनाश्रयपदम् एधामिति न, पदत्वस्य सर्वत्रैक्यादपितूदासीन स्तदितरः समासप्रथमावयवरूपपूर्वपदेतरं तत् संज्ञाफलभूतेतर एधामिति तत्समभिव्याहारापेक्षयैवासतुः कल्पमित्यस्यार्थबोधजनकत्वात् ततश्च तस्य तद्धितान्ततदादित्वेऽप्यर्थवत्त्वाभावात् प्रातिपदिकसंज्ञा न स्यात् स्ववृत्तिसंज्ञानाश्रयपदेतरेत्यत्र वृत्तितायामधिकवाचकपर्याप्तिनिवेशेनैधामासतुः कल्पमित्यत्रासतुःकल्पेत्येतद्वृत्तिसंज्ञा कापि नास्ति इति तादृशसंज्ञानाश्रयपदम् एधामिति तदितरः घटादि स्तत्समभिव्याहारानपेक्षयैवासतुः कल्पेत्यस्य स्वार्थबोधजनकत्वादर्थवत्त्वं सिद्धमिति तु वक्तुमशक्यम् अधिकवाचकपर्याप्तिनिवेशा देवदत्तस्य

पञ्चगव धनं इत्यत्र देवदत्तस्य पंचगवधनेत्यस्याप्यर्थवत्त्वापत्तेः एवं देवदत्तः तस्य पञ्चगवेत्येतद्वृत्तिसंज्ञा कापि नास्ति इति तद्भाश्रयपदं धन इति तदितरघटादिसमभिव्याहारानपेक्षयैव तस्यार्थबोधजनकत्वात् तन्निवेशाभावे तु देवदत्तस्य पञ्चगवेत्येतद्वृत्तिसमाससंज्ञायाः सत्त्वा न्न दोषः न च स्ववृत्तित्वविशिष्टा या संज्ञा तदनाश्रयपदेतरेतिनिवेशेन प्रकृते आस्तुःकल्पमित्येतद्वृत्तित्वविशिष्टा संज्ञा एधामित्यत्र नास्ति विशिष्टाधिकरणताया अन्यत्र स्वीकारा इति तादृशसंज्ञानाश्रयपदमेधामिति तदितरघटादिसमभिव्याहारानपेक्षयैवास्तुःकल्पमित्यस्यार्थबोधजनकत्वादर्थवत्त्वं सिद्धमिति वाच्यम्। तादृशनिवेशे पंचगवधन इत्यत्र पञ्चगवेत्येतद्वृत्तित्वविशिष्टा या समाससंज्ञा तदनाश्रयपदं धन इति तदितरघटादि समभिव्याहारानपेक्षयैव पञ्चगवेत्यस्यार्थबोधजनकत्वादिति चेत्सत्यम् पूर्वं च तत्पदं च पूर्वपदम् स्वादिष्वितिपदत्वानाश्रयं यत् पूर्वपदत्वानाश्रयपूर्वपद स्तदितरो यत्रैतत्संज्ञाफलभूतेतरस्ववृत्तिसंज्ञानाश्रयपदेतरस्तत्समभिव्याहारानपेक्षयार्थबोधजनकत्वमर्थवत्त्वम् एवं चैधामित्यस्य स्ववृत्तिसंज्ञानाश्रयपदेतरत्वेति स्वादिष्वितिपदत्वानाश्रयपूर्वपदेतरत्वन्नास्ति स्वादिष्वितिपदत्वाना श्रयपूर्वपदस्यैव सत्त्वात् आस्तुःकल्पेत्यस्यार्थवत्त्वं सिद्धम् नन्वेवं राजीयतीत्यादौ यप्रत्ययस्यार्थवत्त्वं स्यात् राजतीयस्य स्ववृत्तिसंज्ञानाश्रयपदेतरत्वेऽपि स्वादिष्वितिपदत्वानाश्रयपूर्व्वपदेतरत्वं नास्ति तादृशश्च कोऽप्युदासीन इति तत्समभिव्याहारानपेक्षयैव क्यच्घटकयकारस्यार्थबोधजनकत्वादिति चेन्न। एतत्संज्ञाफलभूतेतरस्ववृत्तिसंज्ञानाश्रयपदेतरस्वनिष्ठविधेयतानिरूपितोद्देश्यतानाश्रयेतरसमभिव्याहारानपेक्षयार्थबोधजनकत्वमर्थवत्त्वम् प्रकृते च एवं क्यच्प्रत्यय स्तन्निष्ठविधेयतानिरूपितोद्देश्यतानाश्रयो राजन्शब्दान्य स्तदितरो राजन्शब्द स्तत्समभिव्याहारापेक्षयैव क्यच्प्रत्ययस्यार्थबोधजनकत्वेनादोषादिति दिक्। वस्तुतस्तु स्वनिष्ठविधेयतानिरूपितोद्देश्यतानाश्रयसमभिव्याहारानपेक्षया लोकेऽपि बोधजनकत्वमर्थवत्त्वम् हरिष्वित्यादौ सुप्रत्ययस्य नार्थवत्त्वम् सुप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयो हरिशब्द स्तत्समभिव्याहारापेक्षयैव सुप्रत्ययस्यार्थबोधजनकत्वात् हर्य्यादिशब्दानां तु विधेयताश्रयत्वाभावादर्थवत्त्वम् एव मेधाञ्चक्रे इत्यादावप्येधामित्यादीनामर्थवत्त्वम्

स्वरूपम् पञ्चगवधन इत्यत्र पञ्चगवेत्यस्य तु नार्थवत्त्वम् समुदाये एवैकार्थीभावपर्य्याप्तेः सत्त्वेन पंचगवेत्येतत्पर्य्याप्तार्थबोधजनकताया अभावादिति श्रीमद्गुरुचरणाः टावापत्तिरितिशेखरः टापं बाधित्वा टिड्ढाणञिति टित्वात् ङीब्न टिड्ढाणञिति सूत्रे अनुपसर्जनाधिकारसत्त्वेन पञ्चगवेत्यस्योपसर्जनत्वात्तदप्रवृत्तेः उपसर्जनत्वं च स्वविशिष्टत्वम् वैशिष्ट्यं च स्वनिष्ठशक्तिनिरूपकार्थत्तिष्ठविशेष्यताविशिष्टत्वसम्बन्धेन, विशेष्यतायाः वैशिष्ट्यं तु स्वनिरूपि[illegible]प्रकारताप्रयोजकत्व, स्वाभाववत्त्व. एतदुभयसम्बन्धेन अभावश्च स्ववृत्तिप्रयोज्यतानिरूपितपदघटितनिष्ठप्रयोजकत्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः स्वविशिष्टत्वमित्यत्र स्वपदेन यस्योपसर्जनत्वं चिकीर्षितं तद्ग्राह्यम् स्वनिष्ठशक्तिश्च पर्याप्त्यापि गृह्यते एवं च प्रकृते पञ्चनिष्ठा या पंचनावः प्रिया यस्येत्येतदर्थनिरूपितशक्तिस्तन्निरूपकान्यपदार्थनिष्ठविशेष्यताविशिष्टत्वं पञ्चनावेत्यत्र गतम् तादृशान्यपदार्थनिष्ठविशेष्यतानिरूपितनौत्वावच्छिन्नप्रकारताप्रयोजकनौशब्दात्त्वस्य तादृशविशेष्यतानिष्ठप्रयोज्यतानिरूपितपदघटितनिष्ठप्रयोजकता पंचनावेत्यत्र नास्ति पञ्चनावेत्येतत्पर्य्याप्तशक्तेरेवाभावेन तत्र तत्प्रयोजकताया अभावादिति तादृशप्रयोजकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्याभाववत्त्वस्य च पञ्चनावेत्यत्र सत्त्वादिति तस्योपसर्जनत्वम् सिद्धम् स्वनिष्ठप्रयोज्यतानिरूपितपदघटितनिष्ठप्रयोजकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वेतिसम्बन्धनिवेशस्य फलन्तु वृषलपत्नीतिसमुदायस्योपसर्जनत्वम्, वृषलपतिनिष्ठशक्तिनिरूपकार्थान्यपदार्थनिष्ठा या विशेष्यता तन्निष्ठप्रयोज्यतानिरूपिता या पदघटितवृषलपतिनिष्ठप्रयोजकता तादृशप्रयोजकत्वस्यैव सत्त्वेन तादृशप्रयोजकत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य तत्र सत्त्वात् अत एवानुपसर्जनाधिकाराभावे पञ्चगवधन इत्यत्र पंचगवेत्यस्मान्ङीप् स्यादिति आपाद्य प्रातिपदिकत्वाभावान्न ङीब् भवतीति नागेशोक्तं संगच्छते येन पंचनावेत्यस्योपसर्जनत्वं भवेत् तादृशोपसर्जनत्वं परिष्क्रियते चेत्पंचगवेत्यस्याप्युपसर्जनत्वं न स्यादिति तदसंगतमेव स्यात् पंचनावप्रिय इत्यत्र टापि कृते 'स्त्रियाः पुम्वदिति' पुम्वद्भावस्तु न अप्रियादिष्विति प्रतिषेधात् गोस्त्रियोरुपसर्जनस्येति ह्रस्वो न प्रत्यासत्त्या यत्समासीयोपसर्जनत्वं तत्समासीयप्रातिपदिकस्य ग्रहणेन प्रकृते पञ्चनावेत्यस्य बहुव्रीहिस-

मासीयोपसर्जनत्वमिति तत्समासीयप्रातिपदिकत्वं पंचनावप्रिय इतिसमुदायस्यैव नतु पञ्चनावेत्यस्येति ह्रस्वाप्रवृत्तेः । न चोत्तरपदाव्यवहितपूर्वत्वमुपजीव्य जायमानः समासस्तमुपजीव्य जायमानश्च् उत्तरपदाव्यवहितपूर्वत्वविघातकटाब्विधानिमित्तं स्यादिति सन्निपातपरिभाषया टाप् न स्यादिति वाच्यम् । कुम्भकारेभ्य इत्यादि भाष्यप्रामाण्येन परम्परासन्निपातविघातके सन्निपातपरिभाषा प्रवृत्तावपि परम्परानिमित्ते तत्प्रवृत्तौ प्रमाणाभावात् । न च समाससंज्ञाविधायक तद्धितार्थेति शास्त्रीयाभ्यनुज्ञावाक्येन सन्निपातपरिभाषायां संकोचः स्यादिति टापः प्रवृत्तिरिति वाच्यम् । संज्ञाशास्त्रेऽभ्यनुज्ञावाक्यस्यैवाभावात् । अभ्यनुज्ञावाक्यं हि विधिशास्त्रेतरेति बोध्यम् । न च संज्ञाशास्त्रेऽभ्यनुज्ञावाक्यस्याभावे आशीर्दिद्दत्तुरित्यादौ एवं तर्हि अङ्गसंज्ञाऽल्लोपे निमित्तं स्यादिति भाष्यं विरुध्येदिति वाच्यम् । तद्भाष्यस्यैकदेश्युक्तित्वेनादोषात् । न चैवमप्युपसर्गनम्पूर्व मित्यस्यानुपसर्जनाव्यहितपूर्वमुपसर्जनम् प्रयोजकमित्यर्थः एवंच तच्छास्त्रीयाभ्यनुज्ञावाक्ये संकोचेन पंचनावप्रिय इत्यत्र टाप् न स्यादिति वाच्यम् । अव्यवहितांशस्य फलाभावेन त्यागेऽदोषात् यत्तु न यासयोरिति निर्देशेन टापि कर्त्तव्ये सन्निपात परिभाषा न प्रवर्तते इत्युक्तं तन्न बुद्धावित्यादिभाष्य, प्रयोगेषु टाबापत्तेः । यदप्युक्तम् पूर्वान्तवद्भावे सन्निपातविघाताऽभावमादाय तत्परिभाषाया अप्रवृत्तिरिति तदपि न आतिदेशिकसन्निपातविघाताभावमादाय तत्परिभाषाऽप्रवृत्तेरस्वीकारात् अत एव बुद्धावित्यादौ टाप् न, क्वचित् पुस्तके ङीबापत्तिरिति पाठः स च प्रातिपदिकत्वे ङीबाप्रक्तिस्स्यात् ततश्चानुपसर्जनग्रहणस्य मर्थ्याद्दिड्ढाणञिति सूत्रे तदन्तविधिरिति भाष्योक्तमसंगतं स्यात् पंचनावप्रिय इत्यत्र ङीन्निवृत्त्यैऽनुसर्जनग्रहणस्यावश्यकत्वात् प्रातिपदिकत्वाभावे तु अनुपसर्जनग्रहणं व्यर्थं सत् तदन्तविधिज्ञापकमित्यर्थेनालापनीयः उपसर्जनत्वं च पूर्वोक्तमेव ग्राह्यम् यत्तु स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमुपसर्जनत्वम् पंचनावप्रिय इत्यत्र पंचनावेत्येतत्पर्याप्तशक्तिरेव नास्तीति पंचनावेत्यस्योपसर्जनत्वाभावेन टापं बाधित्वा ङीवेव स्यादित्येवं रीत्या ङीबापत्ति रित्यस्यापलापनं कृतं तन्न एतादृशोपसर्जनत्वस्वीकारेऽनुपसर्जनग्रहणाभावे पंचगव-

धनमित्यत्र ङीबापत्तिःस्यात् तत्सत्त्वे तु पंचगवेत्यस्योपसर्जनत्वान्नेति नागेशोक्तं व्याहन्येत् नहि पंचगवेत्यस्योक्तमुपर्जनत्वमस्तीति बोध्यम् । वस्तुतस्तु टाब्विधायकशास्त्रस्य ङीब्विधायकशास्त्रस्य चादन्तवाच्ये स्त्रीत्वे टाबादिस्स्यादित्येवार्थः एवञ्च पञ्चनावप्रिय इत्यत्र पंचनावेत्यस्य शक्तिरेवं नास्तीति तद्वाच्यस्त्रीत्वाभावेन टाबापत्ति ङीबापत्तिरित्युभयमयुक्तमेव। नचाकारान्ताद्विगुः स्त्रियामिष्टः इति स्त्रीत्वं स्यादिति वाच्यम् । समासस्यावयवीभूय समासान्तः प्रवर्तते इति नागेशमते अकारान्तोत्तरपदद्विगोरभावेन तदप्रवृत्तेः । अलौकिकवाक्ये उत्तरपदस्यावयवीभूय समासान्तः प्रवर्त्तते इतिवदतां प्राचां मते चाकारान्तोत्तरपदद्विगोस्सत्त्वेऽपि अकारान्तोत्तरपदो द्विगुरित्यनेन स्वतः लिङ्गा या शक्तिः तन्निरूपकत्वमेव स्त्रीत्वे विधीयते इति प्रकृते शक्तेरभावान्न तत्प्राप्तिः यदि च नौशब्दवृत्तिस्त्रियाम्विद्यमानत्वं टजन्ते नावेत्यत्रादाय टाबापत्तिरित्युच्यते, तदा पंचनावेत्यस्य प्रातिपदिकत्वाभावेपि यदागमपरिभाषया टजन्ते आदाय तयोरापत्ति र्दुर्वारैवेति उत्तरपदस्यावयवी भूय समासान्तः प्रवर्त्तते इति वदतां प्राचामिदं दूषणमेवेति बोध्यम् ।

वस्तुतस्तूभयसूत्रे वृत्तिमत्त्वमर्थवत्त्वमित्येकमेवार्थवत्त्वमस्तु वृत्तिमत्त्वमित्यस्य वृत्तिविशिष्टत्वमित्यर्थः वैशिष्ट्यं च स्वपर्य्याप्त्यधिकरणत्व, स्वप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वै तदुभयसम्बन्धेन रामघटकान्त्याकारादानिरासार्थवत्त्वधारणायाद्यः राज्ञः पुरुषावित्येतद्घटकराज्ञः पुरुषेत्यस्यार्थवत्त्ववारणायान्त्यः उत्तरसूत्रेऽनुवृत्तिसामर्थ्यात्तदन्तविधिरित्यस्यानुवृत्तिस्वभावादनुवृत्तमर्थवदिति विशेष्यमादाय तदन्तविधिरित्यर्थः संज्ञाविधाविति निषेधस्तु ज्ञापकसाजत्यात्तदादिविशेष्यमादाय तदन्तविधेरकृत्तद्धितान्तञ्चैवार्थव 'न केवलाः कृतस्तद्धिता वेति' भाष्यंतु कृत्तद्धितान्तश्चैवार्थवत्प्रातिपदिकं नतु केवलकृत्तद्धितावेव प्रातिपदिके 'न केवला प्रकृतिःप्रयोक्तव्या नापि केवलः प्रत्यय' इति भाष्यादिति अर्थवदित्यनुवृत्ति स्वभावात्तदन्तविधिरितीत्थं तद्भाष्यमालापनीयम् यद्वा च शब्दोऽप्यर्थे एवकारो भिन्नक्रमः केवलकृत्तद्धितावार्थवन्तौ न, अपि तु कृत्तद्धितान्तमप्यर्थवदिति तदनुवृत्तिस्वभावात् तदन्तविधिरितीत्थं तद्भाष्यमालापनीयम्

केचित्त्वर्थवदिति सूत्रेऽर्थवदविभक्त्यन्तमप्रातिपदिक मित्येवास्तु विभक्त्यन्ततदादिभिन्नमर्थवत्प्रातिपदिकं भवतीति तदर्थः कृत्तद्धिते-त्यत्र समासश्चेत्येवास्तु समासश्चेति नियमार्थस्तु न राज्ञः पुरुष इत्यादिवाक्येन * अ अ भावश्चेति यस्मिन् स आभावेत्यस्य तु यथास्थितन्यासेऽप्यनभिधानम् अन्यथा समासग्रहणस्य नियमा-र्थत्वं न स्यात् कृदतिङिति सूत्रेऽतिङ्ग्रहणं मास्तु विधिलिङि क्रियादिभ्यादौ तु न दोषः अकृत्सार्वधातुकयो रितिसूत्रस्थसार्वधा-तुकग्रहणेन तिङः कृत्संज्ञा न भवतीति ज्ञापनादिति वदन्ति अपरे तु अर्थवदित्यत्र अर्थवदधातुरप्रत्ययः प्रादिपदिकमेवास्तु अर्थवत्त्वं च वृत्तिमत्त्वम् वृत्तिर्द्विधा· शक्ति र्लक्षणं च तेचोपस्थापिके एव न तु बोधजनकतारूपे एवञ्चोपस्थापिका शक्तिः कृत्तद्धितान्ते अव्यु-त्पन्नप्रातिपदिकसमास एव न तु सुबन्ततिङन्तवाक्ये चेति सु-बन्ते तिङन्ते राज्ञः पुरुष इत्यादिवाक्ये च न दोषः कृत्तद्धितेति सूत्रे कृत्समासावित्येवास्तु कृद्ग्रहणं लिङित्यादौ उपसंजनि-ष्यमाणनिमित्ते ति न्यायेनाधातुरितिपर्युदासात् प्रातिपदिक-संज्ञा न स्या दित्येतदर्थं समासग्रहणन्नियमार्थ न्तेन मूलकेनोपदं शमित्यादिवाक्येन अत्रैकार्थीभावे एव समासविकल्पविधाना-दुपस्थापिकायाश्शक्तेस्सत्त्वात् केवलप्रत्ययस्य तत्प्रयोगाभावेन फलाभावा न्न प्रातिपदिकसंज्ञेति ब्रुवन्ति· अधातुरित्यस्य धातु-त्वावच्छिन्नप्रतियोगिताकभेद इत्यर्थः भेदस्य च स्वरूपस-म्बन्धेनार्थवदित्यत्रान्वयः ननु प्रतियोग्यवृत्तिधर्मस्यैव भेदानुयोगि-तावच्छेदकत्वमिति नियमादर्थवत्त्वस्य धातावपि सत्त्वेन तस्य· कथं भेदानुयोगितावच्छेदकत्वम् उक्तनियमश्चावश्यमेव स्वीकर्त्तव्यः अत एव घटो न द्रव्य मिति वाक्यस्याप्रामाण्य मिति चेन्न। नञा भेदविधेयकबुद्धौ भेदाऽनुयोगितावच्छेदकव्यापकत्वमपेक्षितम् अत एव घटं द्रव्यमानयेत्यादिवाक्यस्य प्रामाण्यन्तत्र भेदविधेयकबो-धसत्त्वेन नियमप्रवृत्ते नैतद्वाक्यस्य प्रामाण्यम् घटप्रतियोगिक-भेदस्य द्रव्यत्वव्यापकत्वाभावात् घटे द्रव्यत्वस्य सत्त्वेन घटप्रति-योगिकभेदस्यासत्त्वा न्न दोषः तद्व्यापकत्वं भेदे अधातुरित्यत्रापि भेदविधेयकबोधाभावेन नियमाप्रवृत्त्या न दोषः घटो न द्रव्यमानये-

* अ अ भवावश्चेति यस्मिन्स स आभवावेत्यपि भवितुं मर्हति—

त्यत्र भेदविधेयकबोधाभावेपि नियमाप्रवृत्त्या । तद्वाक्यस्य प्रामाण्यं नतु तदर्थमसमस्तनञ। भेदविधेयकबोधेऽनुयोगितावच्छेदकत्वस्य भेदेऽपेक्षितमिति नियमान्तरस्वीकारादिति बोध्यम्। यद्धर्मावच्छिन्नवाचकपदोत्तरनञ्पदं तद्धर्मावच्छिन्नप्रतियोगिताकभेद एव भासते इतिनियमस्तु न घटो न पट इति वाक्यात् पटत्वावच्छिन्नप्रतियोगिताकभेदबोधस्यानुभविकत्वात् नतु नामार्थयोरभेदादतिरिक्तः सम्बन्धोऽव्युत्पन्न इतिसिद्धान्ताद्धातुपदार्थस्य भेदे प्रतियोगित्वसम्बन्धेन भेदस्यार्थवति स्वरूपसम्बन्धेन च कथमन्वय इति चेन्न । नञो भेदवति लक्षणेति भेदस्य नामार्थत्वाभावात् नामार्थत्वञ्च नामपदजन्या योपस्थिति स्तादृशोपस्थितीयमुख्यविशेष्यताश्रयत्वम् पदार्थः पदार्थेनान्वेतीति व्युत्पत्तौ तु सनिरूपकपदार्थातिरिक्तत्वेन संकोच इति केचित् वस्तुतस्तु भेदवति लक्षणा न नामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्न इति व्युत्पत्तौ निपातातिरिक्तस्य नामार्थस्य ग्रहणेनादोषादिति दिक् ।

## नामि ।

अङ्गस्येति किम् चर्म्मणाम्

नामी ति सूत्रस्याङ्गाधिकारे पाठाभावे नामि परेऽचो दीर्घस्स्यादित्यर्थे चर्म्मणामित्यादौ दीर्घापत्तिस्स्यादिति भावः । अङ्गग्रहणाभावे प्रत्ययग्रहणपरिभाषया तदादेरुपस्थित्याऽजन्ततदादेरित्यर्थेन चर्म्मन्शित्यस्य तदादेरजन्तत्वाभावेन न कश्चिद्दोष इति न भ्रमितव्यम् तदभावे नामीत्यस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभावात् । अङ्गग्रहणाभावे 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति' परिभाषया 'अर्थवद्ग्रहण' इतिपरिभाषया च नामीति प्रत्ययस्यैव ग्रहणमिति न तत्र दोष इत्यपि न भ्रमितव्यम् अङ्गाधिकारे अतोभिसैसित्यादेः पाठसामर्थ्येन प्रत्ययाप्रत्यययोरिति परिभाषायाश्चात्र प्रकरणेऽनाश्रयणात् अन्यथा ब्राह्मणभिस्सेत्युदाहरणस्योक्तरीत्यैव सिद्धिः तेषामङ्गाधिकारे पाठो व्यर्थः स्यात् । नच प्रकृतसूत्रस्य भाष्ये भाष्यकृता आमिति । न्यासे नकारोच्चारणस्य चर्म्मणामित्यादिफलमुक्तम् तत्र शंक्यते- यद्यत्र- नकारोच्चारणाभावे दीर्घापत्ति स्तर्हि अंगाधिकारे नामीतिसूत्रस्य पाठे किम्फलम् यद्वा अङ्गाधिकारे पाठाभावे यद्यत्र

दीर्घस्तर्हि नकारोच्चारणस्य किं फलमित्युभयसामर्थ्येनात्र दीर्घाभावे सिद्धे अंगाधिकारे नामीतिसूत्रस्य पाठो न कार्य्य इति वाच्यम्। अङ्गाधिकाराभावे नमू धातोः क्विपि, दीर्घे, नामिति चर्म्मणो नाम् चर्म्मनामितीष्टं रूपम् तत्र दीर्घापत्तेः नागेशस्याशयोऽप्यत्रैव णकार-घटितरूपन्तु लेखकप्रमादादिति बोध्यम्। भाष्येपि अङ्गस्येति किं चर्म्मनामिति दन्त्य एव पाठः णकारघटितपाठस्त्वपपाठः। नचाङ्ग-ग्रहणाभावे नोपधाय इति सूत्रं व्यर्थम् सुप्त्वव्याप्यधर्म्मावच्छिन्न-निमित्तताकविधित्वरूपसुत्वस्याभावात्। नलोपः सुप्स्वरेत्यस्या-प्राप्त्या नलोपस्यासिद्धत्वाभावेन पंचानामित्यादौ नलोपे कृतेऽनेनैव दीर्घसिद्धेः अङ्गग्रहणे कृते तु न तद्व्यर्थम् तथासति नामः प्रत्यय-स्यैव ग्रहणेन तत्रापि प्रत्ययः सुबेव नामीत्यस्य सुप्त्वव्याप्यधर्म्मा-वच्छिन्नत्वेन तन्निमित्तताकदीर्घविधौ कर्त्तव्ये नलोपः सुप्स्वरेति नियमान्नलोपस्यासिद्धत्वेनाङ्गस्याजन्तत्वाभावान्नामीत्यस्याप्रवृत्तेरिति वाच्यम्। तत्राङ्गग्रहणाभावे नोपधाया इत्यत्राङ्गग्रहणाभावो वक्तव्य इति नमतेः क्विपि, नाम् हे चर्म्मन् नामित्यादौ नामूपरकना-न्तोपधाया दीर्घो भवत्वित्येतदर्थं तस्य सार्थक्यसम्भवात्॥ ननु नामीति सूत्रस्थाने लाघवाद्दामीत्येव सूत्रमस्तु नकारोच्चारणं न कार्य्यम् अजन्ताङ्गस्य दीर्घस्स्यादामि पर इत्यर्थः। नचैतन्न्यासे रामाणामित्यादौ नित्यत्वात् पूर्वमनेन दीर्घे कृते ह्रस्वाश्रयो नुट् न प्राप्नोतीति वाच्यम्। ह्रस्वान्तान्नुडित्येतद्सामर्थ्याद्भूतपूर्वगत्या ह्रस्वान्तत्वमादाय नुट् सिद्धेः। नच नृ चेति दीर्घविकल्पान्नृणा-मित्यत्र नुट्सम्पादनेन ह्रस्वग्रहणं चरितार्थमिति वाच्यम्। तस्य नृनद्याप इतिन्यासेनैव सिद्धेः। नचैवं पदां, दतामित्यत्रापि नुट् प्राप्नोतीति वाच्यम्। ह्रस्वत्वं नाम मात्राकालिकाच्त्वम् तत्र साम-र्थ्यात् भूतपूर्वगत्याश्रयणं न तु विशेष्यभूताच्त्वांशेपीत्यदोषात्। किञ्च ह्रस्वग्रहणसामर्थ्यात् भूतपूर्वह्रस्वान्तान्नुडितिस्वीकारे पदां दतामि-त्यादावतिप्रसङ्गशङ्कैव नेतिस्वीकारात् किञ्चादेशत्वपक्षेपि शस्प्रभृ-तिष्वित्यस्य विषयसप्तमित्वेन हलन्तादेवाम्विधानेनामुत्पत्तिका-लिकह्रस्वान्तान्नुडित्यर्थो ह्रस्वग्रहणसामर्थ्यात् कल्प्यते तावतापि पदामित्यादावति प्रसङ्गो वारयितुं शक्य एवेति स्वीकारादिति चेन्न नोपधाया इत्यत्रोत्तरार्थं नकारग्रहणमिति समाधानात् अन्यथा नकारोच्चारणाभावे नोपधाया इत्यस्य नान्तस्याङ्गस्याचो दीर्घ स्स्या-

दामीत्यर्थे चर्म्मणामित्यादौ नोपधाया इत्यनेन दीर्घापत्तिस्स्यात् ॥ ननु नामीति सूत्रे नकारोच्चारणाभावे नोपधाया इत्यस्य नान्तस्याङ्गस्याचो दीर्घ स्स्यादामीत्यर्थे यथा चर्म्मणामित्यादौ दूषणं तथा वारीणाम्, शुचीनामित्यादावपि नोपधाया इत्यनेन दीर्घसिद्धे नुमचिरेति वार्त्तिके नुमग्रहणं व्यर्थं तत्सामर्थ्यान् नागमो नुट्सहित आमेवात्र गृह्यते शब्दाधिकारस्याश्रयणात् एवञ्च नकारोच्चारणाभावेपि नोपधाया इत्यस्य नान्तस्याङ्गस्याचो दीर्घो नामि परे इत्यर्थात् चर्म्मणामित्यादौ न दूषणं नकारोच्चारणं न कार्य्यम्। न च नुमि कृते वारीणाम्, शुचीनामित्यादौ इन्हन्निति नियमान्नोपधाया इत्यनेन दीर्घत्वं न प्राप्नोतीति वाच्यम्। इनोऽनर्थकत्वात्। नचानिनस्मन्ग्रहणान्यर्थवता चानर्थकेनेति वचनात् प्राप्तिरिति वाच्यम्। पूषन्नादिलाहचर्य्यात् प्रतिपदोक्तपरिभाषया न तदप्रवृत्तेः एवञ्च नुम्ग्रहणं व्यर्थमेव पूर्वोक्तार्थे ज्ञापकमिति चेन्न। नुम्ग्रहणसामर्थ्यात् आमि परे नान्तस्याङ्गस्येको दीर्घश्चेत्तर्हि नुमः नान्तस्यैवेति विशेषकल्पनेन दण्डिनामित्यादौ दीर्घाभावसिद्धावपि चर्म्मणामित्यादौ नकारग्रहणाभावे दीर्घापत्तेः नुट्सहित इति नियमे मानाभावात् अत एव भाष्ये दण्डिनामिति विहाय चर्म्मणामिति नकारोच्चारणस्य फलं दत्तम्। नच नामीति सूत्रे नकारोच्चारणाभावेपि इन्हन्नितिनियमात् दण्डिनामित्यादौ नोपधाया इत्यनेन दीर्घाप्रवृत्तिरतः दण्डिनामिति विहाय चर्म्मणामित्युक्तम् न तु नुम्ग्रहणज्ञाप्यस्य फलम् एवञ्च नुमः नान्तस्यैवेतिनियमे न किञ्चित् फलम् नुट्सहित इतिनियमे तु चर्म्मणामिति फलम् तस्मान्नुम्ग्रहणात् चर्म्मणामिति न दूषणमिति वाच्यम्। नामन्यतरस्यामितिविकल्पोदात्तार्थं नुम्ग्रहणमितिस्वीकारात् किंच वार्त्तिकाक्षरज्ञापनेन नियमेन वा सूत्राक्षरस्य खण्डनमयुक्तमिति बोध्यम् तस्मान्नकारोच्चारणं कर्त्तव्यमेवेति स्वीकारात्। वस्तुतस्तु अंगाधिकारे सूत्रद्वयस्य पाठे एतदेव प्रयोजनं यच्चर्म्मणामित्यादौ दीर्घो मा भवतु तद्यथा अंगाधिकारेणांगसंज्ञानिमित्तकत्वं प्रत्ययस्यैवेति कृत्वा तस्य चार्थवत एव सम्भवाच्चर्म्मन्घटकनकारमादाय नामि चर्म्मणोऽकारस्य न दीर्घोऽर्थवत्त्वाभावात् आमिन्यासे नोपधाया इत्यत्रापि आमीत्यस्यानुवृत्त्याऽऽमोऽङ्गसंज्ञानिमित्तकत्वेन नान्तस्य चर्म्मण उपधाया दीर्घः स्यादेव पुनरंगाधिकारे पाठो व्यर्थः तस्मात् षट्संज्ञातिरिक्तनान्तस्य

न दीर्घ इतिकल्पनेन चर्म्मणामित्यादौ दोषाभावेनोत्तरसूत्रेण्याम्यनु वृत्त्यैवेष्टसिद्धेः न्यासः सुवच एवेति दिक्।

'ननु नामीति' सूत्रे नोपधाया इतियत् न इति लुप्तषष्ठ्यन्तं पृथक् पदमेवास्तु । नान्तस्याङ्गस्याचो दीर्घस्स्यादामि परे इति तदर्थः। नच नान्तस्याङ्गस्याचो दीर्घ आमीत्यर्थे रामाणामित्यादौ नुटि कृते नान्ताङ्गत्वाभावात् दीर्घो न स्यादिति वाच्यम् । "ह्रस्व-नद्यापो नुट्" इतिन्यासे ह्रस्वान्तस्य नद्यन्तस्याबन्तस्य च नुडागमस्स्या दित्यर्थे नान्तस्याङ्गस्याचो दीर्घ इत्यर्थकेन नामीति सूत्रेणोक्तस्थले दीर्घसिद्धेः । आमीत्यस्याच्यन्वयेन येन नाव्यवधान मितिन्यायात् वर्णैकदेशव्यवधानेऽप्यस्य प्रवृत्तिः एवञ्च नुमचिरेति वार्त्तिके नुम्ग्रहणम् बहुवचने झल्येदिति सूत्रे झलिग्रहणम् नोपधाया इतिसूत्रञ्च न कार्य्यमिति महल्लाघवम् वारीणाम्, शुचीनामित्यादौ इकोचि विभक्ताविति नुमि नान्तस्याङ्गस्याचो दीर्घ इत्यर्थकेन नामीति सूत्रेण दीर्घसिद्धौ वार्त्तिके नुम्ग्रहणस्य वैयर्थ्यं स्पष्टमेवेति अन्यत्र विस्तरः। रामाणामित्यादौ ह्रस्वनद्यापो नुडितिसूत्रेण ह्रस्वान्तस्य नुटि कृते अदन्ताङ्गत्वाभावात् एत्वाप्राप्त्या झलिग्रहणाभावे न दोष इति-झलिग्रहणस्य वैयर्थ्यं स्पष्टमेव । न च झलिग्रहणाभावे हरीणामित्यादौ लाक्षणिकं नुकं बाधित्वा परत्वादनेन रामाणामित्यादावेत्वं स्यादिति तद्वारणार्थं झलिग्रहणमिति वाच्यम् । झलिग्रहणाभावे तत्रापि दीर्घो यञीत्यस्य, उतो वृद्धि र्लुकि हलीतिसूत्रात् हलीत्यस्य च सम्बन्धेनादोषात् । पञ्चानामित्यादावपि नान्तस्याङ्गस्याचो दीर्घ-इत्यर्थकेन नामीतिसूत्रेण दीर्घसिद्धेः नोपधाया इतिसूत्रस्य वैयर्थ्यं स्पष्टमेव। नच नोपधाया इति सूत्राभावे पञ्चानामित्यादौ उक्तार्थकेन नामीतिसूत्रेण पकाराकारस्य दीर्घस्स्यादिति वाच्यम्। अन्त्यबाधे अन्त्यसदेशस्येति परिभाषयाऽङ्गसंज्ञानिमित्तमचो दीर्घ इत्यर्थे येन नाव्यवधानमिति न्यायेन चकाराकारस्यैव दीर्घसिद्धेः । नचोक्तार्थमुपधाग्रहणमिति वाच्यम् । तस्ये तत्रैव पक्तव्यत्वात् उपधाग्रहणस्याधिकं व्याख्यानं पूर्वपक्षावल्यादौ द्रष्टव्यम्। नच नामीति-सूत्रस्य नान्तस्याङ्गस्याचो दीर्घस्स्यादामि परे इत्यर्थे चर्म्मणां वर्म्मणामित्यादौ दीर्घापत्तिरिति वाच्यम्। नामीतिसूत्रस्याग्रे षष इत्यपूर्वमेव न्यासः कर्त्तव्यः तत्र नामीत्यस्यानुवर्त्तनेन षटसंज्ञकनान्तस्याङ्गस्याचो दीर्घस्स्यादामीति तदर्थः तत्र पूर्वेणैव सिद्धे इदं नियमार्थम्

आमूविभक्त्युत्पत्तेः पूर्वं नान्तानां दीर्घश्चेत्तर्हि षट्संज्ञकनान्तानामेवेतिनियमेनैव सिद्धेः। नच षटसंज्ञकनान्तानामेव दीर्घ इत्यपि नियम इति वाच्यम्। फलाभावात्। नचामि षट्संज्ञकनान्तानामेवेति नियम इति वाच्यम्। पूर्वसूत्रस्य वैयर्थ्यात्। नच षट्संज्ञकानां दीर्घश्चेत्तर्हि आमुत्पत्तेः पूर्वं नान्तानामेवेति नियमः तथाच कतीनामित्यादौ दीर्घो न स्यादिति वाच्यम्। न ति सृ इत्यस्याग्रे कतेरिति न्यासेन सिद्धे नैकमितिन्यायेन षष इतिसामान्यसूत्रेऽस्मसामर्थ्यात् तृतीयनियमे शतानामित्यादौ दोषस्तु न सन्निपातपरिभाषया षट्त्वस्यैवाभावात्। नच ह्रस्वनद्यापो नुगिति न्यासे पञ्चानामित्यादौ षट्संज्ञकस्य चतुश्शब्दस्य च नुक् स्यादामि परे इत्यर्थकेन षट्चतुर्भ्यश्चेति सूत्रेण नुकि, पदत्वाभावात् नलोपो न स्यादिति वाच्यम्। तत्र चतुश्शब्दसाहचर्य्येण हलन्तषट्शब्दस्यैव ग्रहणेन पञ्चानामित्यादौ नुमभावेन नकारलोपस्य प्रयोजनाभावेन पञ्चन् आमित्यवस्थायामुकार्थकेन नामीतिसूत्रेण दीर्घे तदसिद्धेः। एवंच तत्र नलोपार्थं ब्रुवः पञ्चानामित्यादिनिर्देशेन सन्निपातपरिभाषाया अनित्यत्वं यत् तदपि न कार्यमिति महल्लाघवम्। नच नुगागमे रामाणाम्, पञ्चानामित्यादौ अल्लोपोन० इतिसूत्रेणाल्लोपापत्तिरिति वाच्यम्। सरूपाणामित्यादिनिर्देशात्, रामाणामित्यादौ सन्निपातपरिभाषयाऽल्लोपस्य वारणाच्च, तत्र प्रतिपदोक्तस्यानोग्रहणाच्च। नच षण्णामित्यत्र नुटि 'प्रत्यये भाषायां नित्यम्' इत्यनेन षकारस्यानुनासिके णकारे नकारस्य ष्टुत्वेन णकारे तत्सिद्धिस्तदिदानीं नुगागमे न स्यादिति वाच्यम्। अनामिति ज्ञापकेन नान्तस्य पूर्वस्य षान्तस्य पदत्वाज्ञापनात्, बहुलाघवत्वेन 'षटचतुर्भ्यो णुट' इतिन्यासेनादोषाच्च, एवं च न पदान्तादित्यत्रानाम्ग्रहणमपि न कार्यमिति महल्लाघवम् तत्र चतुर्ग्रहणसाहचर्येण षान्तषषो ग्रहणं न तु ष्णान्ता षडितिसंज्ञाभूतस्य तेन पञ्चानामित्यादौ न दोष इत्युक्तम्। नच नुगागमे षण्णाम्, तिसृणाम्, त्रयाणामित्यादौ 'षटचतुर्भ्यो हलादिः' इतिसूत्रेणोदात्तस्वरो न स्यादिति वाच्यम्। तत्र हलादिग्रहणं विहाय सामान्येन तद्विधानात्। नच जस्शसोर्दोष इति वाच्यम्। तस्याः आमीतिन्यासे पूर्वसूत्रमनुवर्त्य नियमार्थत्वमंगीकृत्य नियमश्चाजादेश्चेदामेवेति न दोष इतिस्वीकारात्। एवं च हलादिग्रहणमपि न कार्य्यमिति महल्लाघवम् षट्संज्ञकत्रिचतुश्शब्दात्परो

यो हल् ततः परस्य विभक्त्यवयवस्य च उदात्त इत्यर्थेन 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येति' परिभाषया च हलादेर्भिसादेरेव ग्रहणेनादोषाश्च। नच नुडागमे चेतन्तीसुमतीनामित्यत्र, देवसेनानामभिभंजतीनामित्यत्र च 'नामान्यतरस्याम्' ङ्यश्छन्दसि बहुलमिति, सूत्रेण च नामः उदात्तत्वं न स्यात् प्रत्ययत्वादनर्थकत्वाच्चेति वाच्यम्। सिद्धान्ते तु नुट्सहित आम् नामित्यर्थेन तत्रोदात्तत्वसिद्धेः। नच ह्रस्वान्तस्य नुडागमे पञ्चारत्नयः प्रमाणमेषां ते पञ्चारत्नयस्तेषां पञ्चारत्नीन'मित्यत्र इगन्तकालेति स्वरो न स्यादिति वाच्यम्। नुक्समुदायभक्तत्वेनावयवस्येगन्तत्वानपायात्। न च नुगिति न्यासे 'नुमचिरेति' नुट्स्यात्वे प्रराणामिति माधवोक्तं न सिद्ध्येदिति वाच्यम्। वस्तुतस्त्वित्यादिना दीक्षितेनैव तन्मतस्य दूषितत्वात् नागेशेनापि केचिदित्यादिना तदाशयस्य वर्णितत्वेन तन्मतमयुक्तमित्यस्य ध्वनितत्वाच्च एवंच आगमानामागमिधर्म्मवैशिष्ट्यमपि बोध्यत इति ङ्मुट्सूत्रस्थभाष्यप्रामाण्यान्मतीनां, हरीणामित्यादौ णत्वमाशंक्य परिभाषाया अनित्यत्वं शांकरीकृतोक्तं यत्तदपि न कार्यमिदानीमिति परमानुकूलमिति सुधियो विभावयंतु उक्तार्थे न किंचिद्दूषणमिति चेन्न। अनेकक्लिष्टकल्पनापेक्षया मूलोक्तार्थस्यैव युक्तत्वात्, मुनित्रयाशयाद्बोधाच्चेतिदिक्॥ * भाष्यस्थित न्यासमादृत्य नकारग्रहणं खण्डयति नन्वामीत्यस्यापि ह्रस्वेति। नित्यत्वादिति। पूर्वं नुट्यपि यदागमा इतिन्यायेनामूत्वादौ मूर्ध्न्यस्य प्राप्तेः सम्भवादितिभावः। ह्रस्वान्तान्नुडित्येतत्सामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेरिति नामीति सूत्रे नकारग्रहणाभावे नित्यत्वात् पूर्वं दीर्घे पश्चाद् ह्रस्वान्तत्वाभावेन ह्रस्वात्परीभूतस्य नुड्विधानस्य वैयर्थ्यं स्यादिति तत्सामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमादाय नुड् भवतीति ज्ञायते ततश्च रामाणामित्यादौ दीर्घे कृतेपि राम आमित्यवस्थायां यद्ह्रस्वान्तत्वमादाय नुट्सिद्धेरिति भावः। नचामीत्येतदप्राप्तियोग्ये चारितार्थ्यस्य च सत्त्वाद्दीर्घो नुटा बाध्यत एवेति वाच्यम्। साक्षाच्छास्त्रबाधकल्पनापेक्षया पंचमीसमासाश्रयणकल्पनेन चारितार्थ्यस्यैवौचित्यात्। रामाणामित्यादौ कृतेपि दीर्घे स्थानिभूतादचः पूर्वस्मात् परस्यामो नुटि कर्तव्ये स्थानिवद्भावेन ह्रस्वान्तात्परत्व-

* शेखरप्रतीकानुसारेणेदं व्याख्यानम्।

बुद्ध्या नुट्सिद्धेः। यद्यपि पूर्वस्मात्परत्वमाम्नो नास्ति तथापि सामर्थ्यात् अव्यवहितत्वस्यानादरो बोध्यः। यदि च अशब्दादामि आनामित्यादौ स्थानिभूतादचःपूर्वः कोपि नास्तीति न स्यात् तत्र नुडिति तदापि शास्त्रबधिापेक्षया ह्रस्वान्तत्वमुपलक्षणम् नतु विशेषणत्वमित्येव कल्प्यते इति कृतेपि दीर्घेऽस्त्येवोपलक्षणतया ह्रस्वान्तत्वमिति नुट्सिध्यति एतत्फलितमेवोक्तम् शेखरे साम्प्रतिकाभावे भूतपूर्वस्यावगतिः। नृनद्याप इत्येव सिद्धेरिति। ननु ह्रस्वग्रहणसत्त्वे आमीतिन्यासे नित्यत्वान्नृचेति दीर्घपक्षेपि नुटोऽप्राप्त्यां यणि नृआमिति रूपम्, दीर्घाभावपक्षे ह्रस्वान्तत्वप्रयुक्तनुटि नृणामिति नृनद्याप इतिन्यासे दीर्घपक्षेऽपि कृतदीर्घस्य स्थानिवत्त्वेन नृत्वान्नुटि नृणाम्, दीर्घाभावपक्षे स्वतो नृशब्दान्नृणामिति फलभेदात् नृनद्याप इतिन्यासे ह्रस्वग्रहणवैयर्थ्यस्योपपादनमयुक्तम्, नच सम्प्रति नृचेत्यस्य नृनद्यापो नुडित्येतदप्राप्तियोग्येऽचारितार्थ्यस्य कृते तस्मिंस्तु चारितार्थ्यस्य सत्त्वात् संकल्पायप्रवृत्तौ नृआमित्यवस्थायां नुटं बाधित्वा दीर्घे स्वविहितकार्य्याश्रयनृआमित्येतदतिरिक्तत्वेन संकोचे तत्पक्षे नृनद्याप इतिसूत्राप्रवृत्तौ यणि नृआमिति दीर्घाभावपक्षे नृणामिति, ह्रस्वनद्यापो नुडित्यत्र ह्रस्वग्रहणसत्त्वेपि नृचेति दीर्घपक्षे नॄणामिति तदभावपक्षे नुटि नृणामिति ह्रस्वस्य सिद्धत्वेन फलभेदाभावादिति वाच्यम्। नृचेत्यत्र प्राप्तविभाषाविषये भावस्य सिद्धतयाऽभावस्यैव विधेयत्वेन नृचेतिसूत्रविहितदीर्घाभावरूपकार्य्याश्रयातिरिक्तत्वेन संकोचः स्यादिति स्वविहितकार्य्याश्रयनृआमित्येतदतिरिक्तत्वेन संकोचे नुटोऽप्राप्त्या यणि नृआमिति दीर्घपक्षे स्थानिवद्भावेन नृशब्दत्वमादाय नुटि नृणामिति, ह्रस्वग्रहणसत्त्वे तु दीर्घपक्षे ह्रस्वान्तात्पराभावात्तदभावपक्षे संकोचे नुटोऽप्राप्त्या यणि नृआमित्येवं रूपेण फलभेदस्य दुर्वारत्वादिति चेन्न। प्राप्तविभाषास्थले सर्वत्र वाशब्दस्य भावेऽभावेच खंडशश्शक्तिरितिसिद्धान्तः एवञ्च नृचेत्यनेनैवाभावो भावश्च विधीयेते परंचेयानेव विशेषः भावांशेऽनुवादमात्रं अभावांशे त्वपूर्वविधायकत्वमिति विभक्तिनिमित्तके कार्ये कर्त्तव्ये तत्कन्यायो न प्रवर्त्तते इत्यस्य यथा युत्याऽभावत्वावच्छिन्नविधेयताके कार्ये कर्त्तव्ये तत्कन्यायो न प्रवर्त्तते इति कल्प्यते इति प्रकृतेऽभावरूपकार्यस्याभावत्वावच्छिन्नविषयकत्वेन तादृशकार्य्ये तत्कन्यायाप्रवृत्तौ नृ आमित्यवस्थायां नुटि नृणामिति, दीर्घस्याभावत्वावच्छिन्नविधेय-

ताककार्यत्वाभावेन तन्न्यायप्रवृत्तौ स्वविहितकार्यभवन्त्रामित्ये तदतिरिक्तत्वेन नुड्विधायकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने संकोचे नुटोऽप्राप्त्या यणि त्रामिति, तदभावपक्षे नुटि नृणामिति, ह्रस्वग्रहणसत्त्वे नृनद्यापो नुडिति न्यासे फले विशेषाभावेन फलभेदाभावात्। ननु तिसृणामित्याद्यर्थं षट्चतुर्भ्यश्चेतिसूत्रे त्रेरित्यनुवृत्तौ त्रिशब्दादामि परत्वान्नित्यत्वाच्च दीर्घस्वाधित्वा त्रयादेशे पश्चाद्यणीति दीर्घे त्रया आमीति दशायां तत्र स्थानिवत्त्वेन दीर्घविशिष्टे त्रिशब्दत्वमादाय नुट्प्रवृत्तौ त्रयाणामिति ह्रस्वग्रहणसत्त्वे आमीति न्यासेतु, स्थानिवत्त्वेनाज्मात्रवृत्तिह्रस्वत्वस्याऽऽनयितुमशक्यत्वेन त्रयामित्येव जायते इति फलभेदो दुर्वार एव, नच त्रेरित्यनुवृत्तिपक्षेपि चतुश्शब्दसाहचर्यात्त्रिशब्दोऽयोपध एव गृह्यते ततश्च त्रयाणामित्यत्रायोपधत्वाभावादेव षट्चतुर्भ्यश्चेति नुटोऽप्राप्त्या त्रयामित्येव रूपमिति नास्ति फलभेद इति वाच्यम्। त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि, तुकि, त्रित् आमिति स्थितौ त्रित्शब्दस्य ह्रस्वान्तत्वाभावादेव नुटोऽप्राप्त्या ह्रस्वग्रहणसत्त्वे त्रितामिति रूपम्, त्रेरित्यनुवृत्तौ यदागमन्यायेन त्रिशब्दस्य सत्त्वेन नुट्प्रवृत्तौ त्रिनामिति रूपमिति फलभेदस्य साहचर्यावलम्बनेपि दुर्वारत्वात्, ततश्च त्रेरित्यनुवृत्तौ फलभेदो वारयितुं न शक्यते कैरपीति, चतुश्शब्दसाहचर्यात्तकारान्तस्य त्रिशब्दस्य ग्रहणमित्यपि वक्तुं न शक्यते चतुश्शब्दात् तत्करोतीत्यर्थे णिजन्तेन निष्पन्ने चतयतीत्यादौ तकारान्तचतुश्शब्दस्य दृष्टत्वेन साहचर्यस्य विघटनत्वादिति चेन्न। नागेशभट्टमते परम्परास्थानिवद्भावस्य स्त्रीलिङ्गस्थ शेखररीत्याऽसत्त्वेन स्थानिवद्भावेन त्रिशब्दस्थानिकादेशे त्रयरूपे त्रिशब्दत्वानयनेपि दीर्घविशिष्टे त्रया इत्यस्मिन् त्रिशब्दत्वानयने प्रमाणाभावेन त्रयादेशे नुटोऽप्राप्त्या त्रेरित्यनुवृत्तिपक्षेपि त्रयामिति रूपस्यैव सौलभ्येन फलभेदाभावात्॥

ननु नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि, तुकि, तस्मादामि नृत् आमित्यवस्थायां ह्रस्वग्रहणसत्त्वे नुटोऽप्राप्त्या नृतामिति, नृनद्याप इतिन्यासे तु यदागमपरिभाषया तुग्विशिष्टे गृहीतनृशब्दत्वमादाय नुट्प्रवृत्तौ नृत्नामिति ह्रस्वग्रहणनृनद्याप इतिन्यासयोः फलभेदो दुर्वारः, तच यदागमपरिभाषया ह्रस्वत्वमादाय तुग्विशिष्टे नुटः प्रवृत्ति दुर्वारेति वाच्यम्। वर्णग्रहणे यदागमपरिभाषा न

प्रवर्तते इत्युक्ते रितिचेन्न। नागेशमते आचारक्विबन्तप्रकृतिककर्तृ-क्विबन्तानामनभिधानात्॥ ननु नृशब्दस्य ऋशब्देन समासे तत्पुरुषे दीर्घे नॄ इति तस्मात् आमि ह्रस्वग्रहणसत्त्वे पञ्चमीसमासाश्रयणेनाचः परस्मिन्निति ऋकारस्य स्थानिवत्त्वेन ह्रस्वान्तत्वात् ततः परस्यामो नुटि नृणामितिरूपम् जायते सम्प्रति नृनिषापो नुडितिन्यासे तु निरुक्तयुक्त्या स्थानिद्भावेन ऋकारेण व्यवधानात् नृशब्दात् परस्यामोऽभावेन नुटोऽप्राप्त्या यणि त्रामिति फलभेदो दुर्वारः, तत्र फलभेदाभावाय भाष्यप्रामाण्यात् निरुक्तनृशब्दात्परस्यामो नुटि कर्त्तव्ये पंचमीसमासस्यानाश्रयणमिति वाच्यम्। स्थानिवदादेश इतिस्थानिवत्त्वेन दीर्घविशिष्टे नृशब्दत्वान्नुटि नॄणामिति ह्रस्वग्रहणसत्वेऽनल्विधाविति निषेधात् स्थानिवत्त्वाप्राप्त्या नुटः प्राप्त्यभावेन यणि त्रामितिफलभेदस्य तादवस्थ्यात्, आदृतपञ्चमीसमासे तु पूर्वोक्तफलभेदः स्यादिति चेन्न। अस्मिन् विकल्पे भवद्भिरेव वक्तव्यम् नृणामिष्टं त्रामिति वा नृणामितीष्टंचेत् पंचमीसमासाश्रयणाद्दूषणदानस्यानौचित्येन पंचमीसमासो नाश्रीयते इति, नृणामिति नृनचाप इतिन्यासे ह्रस्वग्रहणसत्त्वेत्विष्टरूपसम्पत्त्यर्थमाश्रीयते स इतिस्थानिवद्भावेन ह्रस्वान्तत्वान्नुटि नृणामित्येव रूपम्, नॄमित्येवेष्टंचेत् ह्रस्वग्रहणसत्त्वे पंचमीसमासानाश्रयणेन नृनचाप इतिन्यासस्याश्रयणेन च तत्सिद्धमिति नास्ति फलभेद इतिकल्पनात्॥ नन्वेवमपि छन्दस्युभयथा इतिविकल्पेन दीर्घविधायकेन धातृशब्दाद्दीर्घे ह्रस्वग्रहणदीर्घपक्षे धात्रामिति दीर्घाभावपक्षे ह्रस्वान्तान्नुटि धातॄणामिति रूपद्वयं जायते सम्प्रति नृनचाप इतिन्यासद्वयपक्षेपि धात्रामित्येकमेव रूपं स्यादित्यामिति न्यासे ह्रस्वग्रहणसत्त्वेऽस्त्येव फलभेदो दुर्वारः, एवं श्रीग्रामण्योश्छन्दसीत्यनेनापि विकल्पेन दीर्घो विधीयते तत्रापि ह्रस्वग्रहणसत्त्वे दीर्घपक्षे नुडभावः दीर्घाभावपक्षे नुट् इदानीन्तूभयपक्षेपि नुडभाव एव स्यादिति फलभेदो जागरूक एवेति चेन्न। वक्ष्यमाणन्यासेन फलभेदस्य वारणीयत्वात्। तथाहि 'न तिसृचतसृ, नृच, छन्दस्युभयथा, श्रीग्रामण्योश्छन्दसि, षट्चतुर्भ्यश्चेतानि सूत्राणि ह्रस्वग्रहणञ्च न कर्त्तव्यम् तत्स्थाने "ऋतश्चतुरो नुट्-षण्णचापः" ऋतश्चतुरो नुडित्यत्र त्रेस्त्रय इत्यतस्त्रेरित्यनुवर्तते इति लघुभूतन्यासेन सिद्धे गुरुभूतह्रस्वग्रहणसामर्थ्यात् साम्प्रतिकाभावे भूतपूर्वगत्याश्रयणमिति। परन्त्वत्र पक्षेपि त्रिताम्, त्रिणामिति फल-

भेदवारणाथा चारक्विबन्तप्रकृतिककर्तृक्विपोनभिधानस्बोध्यम् । अन्ये फलभेदाः स्वस्वबुद्ध्या वारणीयाः इत्येतत्सकलमभिप्रेत्याह "तदुक्तम्भाष्ये इति नह्येकमुदाहरणं योगारम्भं प्रयोजयतीति" * ।

होढ इतिसूत्रस्य शेखरे पदान्ते विद्यमानस्येत्यस्य पदान्तभिन्नस्येत्यर्थः तेन लिहावित्यादौ न ढत्वादिकार्य्यम् । अत एव नामधातुविषये दाम्लिडित्यादौ ढत्वघत्वाभावौ सिद्धाविति दादेर्धातोर्घ इतिसूत्रे शेखरः वस्तुतस्तु दामलिगित्येव युक्तम् अपवादपक्षे उक्तरूपस्य लाभेनाथवेति पक्षेऽपि तस्यैव युक्तत्वात् उत्तरत्र दादेरित्यनुवृत्तिस्तु धात्वधंयवो यो दादिरित्यर्थलाभाय, अर्थाधिकारानुरोधात् पूर्वत्रापि धात्ववयवदादिभिन्नानां ढ इत्येवार्थः अन्यथा त्वन्मतेपि औपदेशिकदादित्ववतो धातुत्वाऽव्यभिचारेण तद्ग्रहणस्य वैयर्थ्यं स्यात् एवञ्च धात्ववयवस्य दादेर्घ इत्युच्यते कथम् घुगितिशंकायां व्यपदेशिवद्भावेन समाधानं संगच्छते गर्द्धबित्यत्र भष्भावश्च सिद्ध्यति उत्तरार्थमावश्यकमित्यस्य नहि अधिकरणमन्वयो दोषः उत्तरसूत्रे तस्यावश्यकत्वादित्यर्थः ।

---

पृथग्वक्तव्यः द्वितीयाद्यौस्वेन इतिसूत्रे इति प्राञ्चः । 'पृथगिति नव्य' इतिशेखरः । वस्तुतस्तु प्राचीनमतमेव ज्यायः विभक्तिपूर्वकस्य कार्यस्य येननाप्राप्ते इत्यस्य प्रवृत्तेः अत एव 'इदमोम' इतिसार्थकम् नपुंसककवद्धन इति तु पूर्वपक्षी सामर्थ्यादित्यस्य दकारोच्चारणसामर्थ्यादित्यर्थः अत एव यद्येनद्वक्तव्य इतिभाष्यं संगच्छते पतञ्जलिक इत्यस्यानभिधाने न मानम् सामर्थ्यस्य स्वमोर्नपुंसकादिति लुकि प्रयोजकत्वेनोपक्षीणतया सुपो धातुप्रातिपदिकयोरिति लुकि प्रत्ययलक्षणप्रवर्तकत्वे मानाभावात् ।

समुदायस्य सखिरूपत्वाभावादिति । अत्रासखीत्यस्य सख्यवयवभिन्नेत्यादिरर्थः अत्र प्रमाणं यस्येतिचेति सूत्रस्थं भाष्यमेव; ख्यत्यादिति सूत्रे तु न सखिपतिभ्यामित्येवोच्येतेति भाष्यन्तु विहितविशेषणानाश्रयणेनैव प्रतिपदोक्तपरिभाषाऽनाश्रयणेनैव तद्भाष्यं प्रवृत्तमिति शेखरः । वस्तुतः असखीत्यस्य सखिभिन्नेत्येवार्थः, अत एव न सखिपतिभ्यामित्येवोच्येत् अतिसखेरित्यत्र माभूत् इतिभाष्यं

---

* अस्योपरि अधिकं व्याख्यानं द्वितीयखंडे द्रष्टव्यम् ।

संगच्छते अत्र विहितविशेषणानाश्रयणन्तु बहुपत्युरिति सिद्धयर्थम् प्रतिपदोक्तपरिभाषाऽनाश्रयणे प्रमाणाभावात्, यस्येतिचेतिसूत्रस्थभाष्यन्तु यदि लोपो न स्यात् तर्हि पूर्वान्तवद्भावेन सखिशब्दत्वात् राजाहःसखिभ्य इति टच् स्यात् तथा च अतिसखेरागच्छतीति न स्यात् अतिसखात् आगच्छतीति स्यात् लोपे तु लिङ्गविशिष्टपरिभाषया सखिशब्दत्वम् सा च समासान्तविधौ अनित्या सखिशब्दस्य तदवयवपरेति इदमयुक्तम् लिङ्गविशिष्टपरिभाषया विशिष्टसखिशब्दत्वमतिदिश्यते तदवयवत्वन्तु अर्थसमाजग्रस्तमिति दिक्।

## अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि।

अत्र पारिभाषिकस्यैव ग्रहणमिति नव्याः तन्न युक्तम् कम्बलाच्चेतिसूत्रस्थप्रकृतसूत्रस्थ संख्यायाःकृत्वसुजर्थस्य चेति सूत्रस्थभाष्यविरोधात् तथाहि अयं योगः शक्योऽवक्तुम् परिमाणे पर्य्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थम् परिमाणञ्च संज्ञैव इमौ द्वौ प्रतिषेधौ उद्देशे तत्रैव शक्योऽवक्तुम् कथमेवं वक्ष्यति परिमाणान्तात्तद्धितलुकि ङीब् भवतीति तन्नियमार्थं भविष्यति परिमाणान्तादेव तद्धितलुकि नान्यदिति ततो विस्ताचितकम्बल्येभ्यो न तद्धित लुकीत्येव, विस्तादीनां परि[illegible]ऽप्रतिषेधो विधेय इतिकैयटः ज्ञापकन्तु कालपरिमाणानां परिमाणशब्देन ग्रहणं न भविष्यति किमेतस्य ज्ञापने प्रयोजनम् अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि द्विवर्षा त्रिवर्षा परिमाणपर्य्युदासेन पर्य्युदासो न भवति यदि तु नव्यमतमपि समर्थनीयं तर्हीत्थं समर्थ्यताम् परिमाणेऽपर्य्युदासे प्राप्ते कम्बल्यग्रहणं क्रियतेऽपरिणामार्थम् प्रमाणपरिणामभिन्नार्थं परिमाणञ्च संज्ञैव विस्तकम्बल्येभ्यो नेति अर्थसिद्ध एव निषेधः एवञ्चोन्मानस्य चेत्तर्हि विस्तकम्बल्येभ्यो नेति कालपरिमाणेति भाष्यन्तु एकदेशिनः।

## इण्कोः।

ननु इण्कोरित्यधिकारसूत्रं न कार्य्यम्।

न च रामस्येत्यत्र स्यादेशस्य स्थानिवद्भावेन प्रत्ययत्वात् तदवयवस्य षत्वं स्यादिति वाच्यम्। प्रक्रियालाघवाय स्यादेशे कर्त्तव्ये

सकारोच्चारणसामर्थ्यात् षत्वाभावसिद्धेः । न च टाङसिङसामिनाख्या इत्युक्तौ ष्टुत्वापत्तिरिति वाच्यम् । तोःषीति निषेधस्य जागरूकत्वात् । न च षःप्रत्ययस्येतीत्संज्ञापत्तिरिति वाच्यम् । षकारोच्चारणसामर्थ्यादेव तद्बाधात् । नन्वेवममुष्य पुत्र इत्यत्र षत्वं न स्यादिति वाच्यम् । आमुष्यायणामुष्य पुत्रिकामुष्यकुलिकेतिवार्त्तिकनिपातेन तत्र षत्वसिद्धेः । न च इणकोरि ति सूत्राभावे हे राम त्वं स्येत्यत्र दोष इति वाच्यम् । सात्पदाद्योरिति निषेधस्य जागरूकत्वात् । न च रमत इति रमाः सर्वधातुभ्यः असुन् तं यातीति रमस्थः आतोनुपसर्गेकः रमस्य एव रामस्यः तत्सम्बोधने हे रामस्येत्यत्र षत्वापत्तिरिति वाच्यम् । अपेदान्तस्य मूर्धन्य इत्यधिकारात्, प्रकृतेचान्तर्वर्त्तिविभक्त्या पदत्वात् । देवो यातीतिवद्रुत्वोत्वयोरेव प्राप्तेश्च । न च गतिकारकोपपदानामिति परिभाषया सुबुत्पत्तेः प्रागेव समासत्वमिति वाच्यम् । तत्रेतरपदेषु सुबुत्पत्तेः प्रागित्यर्थेनादोषात् । अन्यथा चर्मकृतीत्यादौ नलोपानापत्तिः । न च रामिच्छतीति रामस्यति रामस्यतीति रामस्य स्तत् सम्बोधने हे रामस्येत्यत्र षत्वापत्तिरिति वाच्यम् । सुगागमस्य प्रत्ययावयवत्वाभावात् । न च विश्वपास्वित्यत्र षत्वापत्तिरिति वाच्यम् । सकारोच्चारणसामर्थ्यात्षत्वाभावसिद्धेरिति चेन्न । लिटः स्थित्यादौ घुटसम्पादनेन सकारस्य चारितार्थ्येन विश्वपास्वित्यत्र षत्वस्य सार्थक्यात् । न च "इणकोः किं रामस्ये"ति ग्रन्थस्यासंगतिस्स्यादिति वाच्यम् । रमत इति रमस्तमिच्छति रमस्यति रमस्यतीति रमस्यः रमस्य एव रामस्यस्तत्सम्बोधने हे रामस्येत्यत्र षत्वापत्तेः नहि तत्रान्तर्वर्त्तिविभक्त्या पदत्वं लभ्यते, नः क्ये इति नियमेन बाधात् ।

## पुगन्तलघूपधस्य च ।

नन्वत्र लघुग्रहणं न कार्य्यम् । उपधाया इको गुण इत्यर्थेनैव चेततीत्यादीनां संसिद्धिः । नच तदभावे ईहते, ऊहत इत्यादौ गुणापत्ति स्स्यादिति वाच्यम् । अत्र पुगन्तग्रहणसामर्थ्येन दीर्घान्तस्य चेत्तर्हि पुगन्तस्यैवेति नियमेन तत्र गुणवारणात् । अन्यथा दीर्घोपधस्य गुणश्चेत्तर्हि अनेनैव क्नोपयतीत्यादौ गुणसिद्धिः पुगन्तग्रहणस्य वैयर्थ्यं स्पष्टमेव । न च पुगन्तस्य चेत्तर्हि दीर्घोपधस्यैवेति

विपरीतनियमेन अर्पयतीत्यादौ गुणो न स्यादिति वाच्यम् । अर्ति-ह्रीति सूत्रे पुग्स्थाने पुट् एव वक्तव्यः णेः षष्ठ्यन्तत्वेन विपरिणामश्च कर्त्तव्यः, तथा च एभ्यो णेः पुडागमे यदागमा इति, न्यायेन सार्वधातुकार्द्धधातुकयोरित्यनेनैव सिद्धे पुगन्तेतिसूत्रे पुग्ग्रहणं व्यर्थं स्पष्टमेवेति स्वीकारात् । न चैवं क्नोपयतीत्यादौ बलादित्वेनेट् स्यादिति वाच्यम् । अर्तीति सूत्रे पुग्ग्रहणमपहाय श्पप् इति न्यासः कर्त्तव्यः तथाच णिनिरूपिताऽव्यवहितपूर्वत्वविशिष्टेभ्यः अर्तिप्रभृतिभ्यः श्पप् स्यात् एवंच श्पपः शित्त्वेन सार्वधातुकत्वम् पित्वेनाङित्वम् तेन क्नोपयतीत्यादीनां सिद्धेः । ... आपयतीत्यादौ पाघ्राध्मेति जिघ्रादेश इति वाच्यम् । अर्तीतिसूत्रेण पप्विधानात् । तिङ्शित्सार्वधातुकमिति सूत्रे तिङ्शित् पप्सार्वधातुक मिति न्यासः कर्त्तव्यः एवञ्च क्नोपयतीत्यादीनां सिद्धिरिति चेन्न ह्रयणं ह्रय इति घञर्थे कविधानम् ह्रियमाचरति ह्रियति ह्रियतीति हि आचारक्विबन्तात् कर्त्तरि क्विप्ततः आचष्टे णिचि ह्रिययति अत्र जुगुप्सतीत्यादाविव धातोरितत्यविहित्वात्सार्द्धधातुकत्वमतो न गुणस्साम्प्रतम्, इदानीं पपन्यासे पपः सार्वधातुकत्वेन सार्वधातुकार्द्धधातुकयोरि तिगुणस्स्यात् । किञ्च पुगागमाभावे अपिप्यत्, अतिष्टपत् इत्यादौ पिबतेरि-श्चोपधाया तिष्ठते रित्यादिसूत्रेणोपधात्वाभावेनेत्वाप्रवृत्तेः ।

## कर्तुरीप्सिततमं कर्म्म ।

कर्तुरिति "क्तस्य च वर्त्तमाने" इति कर्त्तरि षष्ठी । एतेन कर्तृकरणयोरिति सूत्रप्राप्ततृतीयाबाधिका कर्तृकर्म्मणोरि तिषष्ठी तद्बाधक नलोके तिसूत्रमिति कथं षष्ठीत्यपास्तम् । न लोकेत्यस्यापवाद " क्तस्य च वर्त्तमान " इतिसूत्रस्य जागरूकत्वात् । ईप्सितमिति आप्नोते स्सन्नन्तान्मतिबुद्धिपूजार्थेभ्यश्चेतिसूत्रेण वर्त्तमाने क्तः। नचेप्सधातो मत्याद्यर्थाभावात कथं तत्सूत्रप्राप्तिरिति वाच्यम् । मति बुद्धि, सूत्रे मतिशब्देनेच्छा गृह्यते पुनर्बुद्धिग्रहणात्, अन्यथा मतिबुद्ध्योः पर्यायत्वादन्यतरवैयर्थ्यं तदवस्थमेवेत्याशयात् । न च पुनर्बुद्धिग्रहणात् सर्वाद्यर्थानां ग्रहणं कस्मान्नेति वाच्यम् । मतिग्रहणस्य भाष्ये इच्छाद्यर्थकधातूदाहरणप्रामाण्येनेच्छार्थककल्पनायाः न्याय्यत्वात्, अत्रैव कर्तुरिति सूत्रे षष्ठीदर्शनात्, अन्यथा भवन्नये वर्त्तमानकालिकस्याभावाद् भूतार्थकक्तस्य योगे षष्ठी निषेधात् तन्निर्देशास-

प...
प्रापय...
मित्या...
त्यर्थः स्यात्तद्दे...
कर्त्रा प्राप्तुमिष्यमाणः कर्म...
ऽस्तीति । ग्रामं गच्छतीत्यादावेव, कर्म...
मोदन मित्यादावोदनस्य प्राप्तुमिष्यमाण...
र्थग्रहणे तु ईप्सितमित्यस्य सम्बन्धुमिष्यम... ...: तथाच
संयोगरूपफलेन सम्बन्धुमिष्यमाणं यत्तत्कर्मेति सूत्रार्थः फलञ्च धातु-
वाच्यम् । एवञ्च ग्रामं गच्छतीत्यत्र संयोगानुकूलो व्यापारो गमधा-
त्वर्थः देवदत्तेन कर्त्रा संयोगरूपफलेन सम्बन्धुमिष्यमाणो ग्रामो
भवतीति कर्म्मत्वसिद्धिः तथाच भुञ्जीयाहमोदनमित्यत्र भोजनानु-
कूलो व्यापारो भुजधात्वर्थः तत्र भोजनफलम् तदनुकूलो व्यापारो-
ह... ति पदवाच्यम् कर्त्रा भोजनरूपेण फलेन सम्बन्धुमिष्यमाणोद-
नं भवतीति कर्म्मत्वसिद्धिः तस्मात् प्रकृतेः सम्बन्धार्थत्व एव तद्भा-
ष्यप्रयोगाऽसङ्गतिः स्पष्टैवेति मानम् ।

अतिशयनेप्सितमिति विग्रहे अतिशायने तमप् इष्ठनाविति तम-
प्प्रत्ययः कारके, इत्यधिकारः कारके इति सौत्री सप्तमी प्रथमार्थे
कारक इति संज्ञानिर्देश इतिभाष्यात् एवञ्च कर्त्रा सम्बन्धुमिष्यमाणं
यत्तत्कारकसंज्ञं सत्कर्मसंज्ञं स्यादितिसूत्रार्थः तत्र सम्बन्धस्य द्विष्ठ-
त्वात्, सम्बन्धुमिष्यमाणमित्यत्र केन सम्बन्धुमिष्यमाण मित्याकां-
क्षायां यदि व्याप्तिन्यायेन येन केनापि सम्बन्धुमिष्यमाणं स्वीक्रियते
तदा यागेन सम्बन्धुमिष्यमाणो ग्राम इति ग्रामं गच्छतीति वत्
धनेन सम्बन्धुमिष्यमाणः पुत्रोऽस्तीति देवदत्तः पुत्रस्य धनमिच्छती
त्यादौ पुत्रस्यापि कर्म्मत्वापत्तेः तस्मात् पशुना रुद्रं यजत इत्यादौ
कर्म्मणः करणसंज्ञा सम्प्रदानस्य च कर्म्मसंज्ञेति व्याख्यानाच्च ।
मत्तौ... व्यापारेण सम्बन्धुमिष्यमाण मित्यर्थः व्यापारः
कथं प्रत्यासन्न इति चेच्छृणु सूत्रे कर्तृपदञ्च वर्तते तदर्थधातूपात्त-

विपरीतनियमेन अर्पयतीत्यादौ गुणो न स्यादिति वाच्यम् । अर्ति-ह्रीति सूत्रे पुक्स्थाने पुट् एव वक्तव्यः णेः षष्ठ्यन्तत्वेन विपरिणामश्च कर्त्तव्यः, तथा च पश्यो णेः पुडागमे यदागमा इति, न्यायेन सार्वधातुकार्द्धधातुकयोरित्यनेनैव सिद्धेः पुगन्तेतिसूत्रे पुग्ग्रहणं व्यर्थं स्पष्टमेवेति स्वीकारात् । न चैवं [illegible]पयतीत्यादौ वलादित्वेनेट् स्यादिति वाच्यम् । अर्त्तीति सूत्रे पुग्[illegible]मपहाय श्यप् इति न्यासः कर्तव्यः तथाच णिनिरूपिताऽव्यवहितपूर्वत्वविशिष्टेभ्यः अर्तिप्रभृतिभ्यः तथा स्यात् एवंच श्यपः शित्वेन सार्वधातुकत्वम् [illegible] यकारकं क्नोपयतीत्यादीनां सिद्धेः । [illegible] भजतीत्यादौ प्रीत्यनुकूलो देश इति वाच्यम् । अर्त्ती[illegible]फलं तदनुकूलो व्यापारो देवदत्तेन तुरुमिति पत्रे तिङ्[illegible]प्रीतिरूपेण फलेन सम्बन्धुमिष्यमाणो हरि[illegible] [illegible]लिङ्गिरिति एतत्सूत्रफलितार्थः फलाश्रयकर्म[illegible] व्यापा[illegible]सम्बन्धग्रहणे मानत्वेन तत्सूत्रमेव अन्यथा तत्सूत्रालङ्कृतिः [illegible] भाष्यप्रयोगश्च प्रमाणम् अन्यथा ओदनस्य कर्मत्वा[illegible]तिदिक् ।

कृत्तित्वं षष्ठ्यर्थः [illegible]प्रयोज्यफलाश्रयत्वप्रकारक[illegible]द्देश्यं कर्म । ननु [illegible] कर्तृशब्दात् व्यापारविशिष्टो[illegible] बुध्यते ङस् शब्दादपि [illegible]विशिष्टोऽर्थो बुध्यते तथा च [illegible] [illegible] शाब्दबोधे [illegible] न च कर्तृप[illegible]र्थस्य ङस्पदार्थ[illegible] [illegible]ऽन्वय इति [illegible] । तद्धर्मविशिष्टस्य तद्धर्म[illegible] आश्रयतयाऽन्वयोऽनुपपत्तेः । [illegible] एव ग्रामं गच्छतीतिवत् [illegible]गच्छतीति प्रयोगो नेति चेन्न । [illegible]स्य स्वतन्त्रपरत्वेन द्विरूपोपस्थि[illegible] [illegible]षात् शब्दोऽपि शाब्दबोधे भासते इति वैयाकरणसिद्धान्तात् कर्तृशब्दस्य ङस् शब्द[illegible] [illegible] शाब्दबोधविषयत्वेन कर्तृवाच्यव्यापार-विशिष्टङस्वाच्यव्यापा[illegible]द्विरूपोपस्थितिसत्त्वात् ॥

इति पाणिनि[illegible]दीपस्य प्रथमः खण्डः समाप्तः ।

अस्य द्वितीयखण्डोऽपि शीघ्रमेव भवन्तः प्राप्स्यन्तीति ।

